# मुद्राराक्षसम् ।

—०—

महाकवि-श्रीविशाखदत्त-विरचितम् ।

—✿—

गङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मजेन
शब्दाचार्य्य-पुराणशास्त्रि-सांख्यरत्न-
व्याकरणतीर्थ-काव्यतीर्थ-
स्मृतितीर्थोपाधिना
महोपदेशक-

**श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्येण**

प्रणीतया चाणक्यचातुरी-समाख्यया
टीकया वङ्गानुवादेन च
समन्वितम् ।

—०—

१८५० शकाब्दीय सौरचैत्रे तेनैव नकीपुर-
हरिचरणचतुष्पाठीतः
प्रकाशितञ्च ।

# नाम्नोल्लिखितव्यक्तीनां

## पुरुषगणाः ।

| | |
|---|---|
| सूत्रधारः ... | प्रस्तावसूचकः प्रधाननटः । |
| **चाणक्यः** | **चन्द्रगुप्तस्य गुरुर्मन्त्री च ।** |
| शिष्यः ... | शार्ङ्गरवनामा चाणक्यस्य शिष्यः । |
| चरः | निपुणकनामा चाणक्यस्य गुप्तचरः । |
| सिद्धार्थकः | कश्चित् राजपुरुषः । |
| चन्दनदासः | कुसुमपुरवास्तव्यश्चैको वणिक् । |
| आहितुण्डिकः | व्यालग्राहिच्छद्मवेशो विराधगुप्तनामा राक्षसस्य गुप्तचरः । |
| **राक्षसः** | **नन्दवंशीयमन्त्री ।** |
| कञ्चुकी | जाजलिनामा मलयकेतोरन्तःपुरचरो वृद्धो ब्राह्मणः । |
| पुरुषः | प्रियंवदकनामा राक्षसस्य द्वारपालः । |
| शकटदासः | राक्षसस्य सुहृत् कायस्थो लेखकः । |
| **राजा** | **नायकश्चन्द्रगुप्तः ।** |
| कञ्चुकी | वैहीनरिनामा चन्द्रगुप्तस्यान्तःपुरचरो वृद्धो ब्राह्मणः । |
| करभकः | राक्षसस्य गुप्तचरः । |
| दौवारिकः | राक्षसस्य अपरो द्वारपालः । |
| पुरुषः | मलयकेतोः शरीररक्षकः । |
| **मलयकेतुः** | **प्रतिनायकः पर्वतकराजकुमारः ।** |
| भागुरायणः | मलयकेतोः कपटाश्रितः चाणक्यचरः । |
| क्षपणकः | जीवसिद्धिनामा बौद्धसन्न्यासी चाणक्यचरः । |
| पुरुषः | भासुरकनामा मलयकेतोर्द्वारपालः । |
| समिद्धार्थकः | चन्द्रगुप्तपक्षे राजपुरुषः । |
| पुरुषः | चाणक्यचरः । |
| प्रथमचण्डालः | वज्रलोमनामा घातकः । |
| द्वितीयचण्डालः | वेणुवक्त्रकनामा घातकः । |
| पुत्रः | चन्दनदासस्य आत्मजः । |

## स्त्रीगणाः ।

| | |
|---|---|
| नटी | सूत्रधारस्य पत्नी । |
| प्रतीहारी | शोणोत्तरानाम्नी चन्द्रगुप्तद्वाररक्षिका । |
| प्रतीहारी | विजयानाम्नी मलयकेतुद्वाररक्षिका । |
| कुटुम्बिनी | चन्दनदासस्य स्त्री । |

# अथ नाटकेतिहासः ।

आसीत् किल मगधदेशे पाटलिपुत्रनगरे खृष्टपूर्वचतुर्थ-शताब्दीप्रथमभागे नवतिशतकोटिधनस्वामी 'नन्द' इति वंश-गतोपाधिकः शूद्रजातीयो महापद्मो नाम राजा (क)। तस्य च 'रत्नावली' नामिकायां महिष्याम् अष्टौ पुत्रा बभूवुः, 'मुरा' नामिकायां परममनोहरायां नापितजातीयायां दास्याञ्च जात-श्चन्द्रगुप्तः। अतएवासौ मातृनाम्ना मौर्य्य इत्याख्यायते। तेषां मध्ये चन्द्रगुप्त एव ज्येष्ठः सुन्दराकृतिः समस्तराजलक्षणगुण-सम्पन्नतया भ्रातृणामन्येषां विद्वेषविषयश्च नीचमातृकतया घृणाविषयश्चासीत्। तेन च राज्ञा महापद्मनन्देन सगोत्रो भ्रातृपर्य्यायो विश्वकेतुर्नाम स्वराज्योत्तरपश्चिमपार्श्वप्रदेशे शासनकर्त्तृभावेन नियुक्तः स्थितः। अतएवासौ 'पर्वतेश्वरः' 'शैलेश्वरः' 'पर्वतकः' इति च प्रसिद्धिमुपलेभे। तस्य च विश्वकेतोः पुत्रो मलयकेतुस्तदानीं पाटलिपुत्रनगर एवावतस्थे।

तस्य च राज्ञो महापद्मस्य राक्षस वक्रनास-शकटारनामान-स्त्रयो महाविचक्षणा ब्राह्मणाः कुलामात्या आसन्। तेषाञ्च शकटारः प्रागेव राजविद्विष्टः कदाचित् शवदाहनप्रसङ्गेन मृतभ्रान्त्या जीवन्तमपि दाहयन् (ख) सपुत्रगणः क्रुद्धेन

---

(क) "नवति-शत-द्रव्य-कोटीश्वरास्ते" मुद्राराक्षसतृतीयाङ्के २७ पद्यम्। "शूद्रागर्भोद्भवो महापद्मो नन्दः परशुराम इवाखिलक्षत्रियान्तकारी भविता" इति विष्णुपुराणम्। कथासरित्सागरे तु योगानन्द इति नाम वृत्तान्तश्चान्यथा दृश्यते। महानन्द इति नामापि क्वचित्।

(ख) इदमुपाख्यानं कथासरित्सागरे लक्ष्यते। विस्तरस्तु तत्रैव द्रष्टव्यः।

राज्ञा निर्विचारं भूगर्भकारायां निक्षिप्तः ; दत्तञ्चास्मै सपुत्र-गणाय प्रत्यहं चणक-(छोला) मात्रं खाद्यं तदनुरूपञ्च पेयं जलम्। पुत्रगणसम्मत्या तन्मात्रपानभोजनाभ्यां केवलः शकटार एव जीवितः, पुत्रास्तु मृताः। उद्धतस्वभावेनापि सञ्जातदयेन राज्ञा कदाचिदसौ शकटारः समुद्धृतः पुनः स्वपद एवावस्थापितश्च। ततो गच्छति काले सुस्थीभूतशरीरो नन्दसमूलप्रतिहिंसया निरुद्धपुत्रशोकः शकटारः पुरबहिः परिभ्रमन् कस्मिंश्चिदायतने कृष्णकायं लम्बितशिखं कुशमूले तक्रसेचनव्यग्रहस्तं कञ्चित् पुरुषमवलोक्य 'कस्त्वम्, कुत इदम् ?' इत्यपृच्छत्। स च तं प्रत्यवदत्—"तक्षशिलायां जात इहागत्याधीतशास्त्रश्चाणक्यनामा ब्राह्मणोऽहम् ; विवाहावसरे खल्वमोभिः कुशैः पादयोर्मे क्षतं विधाय कृताशौचविधानेन विवाहोऽसौ प्रतिबद्धः ; अतः समूलमिमान् कुशानुन्मूलयितुं मूले तक्रं सिञ्चामि।" शकटारस्तु तं तत एव दारुणप्रतिहिंसं मन्यमानः स्वभवनमुपनीय निभृतमस्थापयत्। अथ कदाचिदागते राज्ञः पितृश्राद्धावसरे राज्ञैव ब्राह्मणनिमन्त्रणाय दत्तभारः शकटारस्तं चाणक्यमेव निमन्त्रितवान्। चाणक्यश्च तदा गत्वा शकटारेङ्गितेन ब्राह्मणासने समुपाविशत्। राजा चागत्य महामूल्यब्राह्मणासने कदाकारम् अदृष्टपूर्वं चाणक्यमवलोक्य शिखायामाकृष्य सतिरस्कारं निष्काशितवान्। ततश्च चाणक्यः शिखामुन्मोच्य कोपस्फुरितलोचनाननः स्पष्टमवोचत् "नन्दवंशध्वंसमकृत्वा नाहमिमां शिखां बध्नामि ; यः खलु राज्यं लिप्सति, स मामनुगच्छतु" इत्यनेन व्याघ्राग्रहग्रस्तेन नन्देनोपेक्षितश्चाणक्यो नगरान्निरगच्छत्।

अथ पितृभ्रातृविद्वेषादनायासेन राज्यलाभे निराशः प्रज्ञाविक्रमशाली दर्शनमात्रेणैव लोकयोग्यताभिज्ञश्चन्द्रगुप्तो निभृतं निर्गत्य चाणक्येन सह सम्मिलितः। सञ्जातश्च तयोः कर्त्तव्यादिसम्बन्धे सुदृढः सन्धिः। चाणक्यश्च नन्दान्निहन्तुमारब्धवानभिचारक्रियाम्; चन्द्रगुप्तश्च गतवान् पर्वतकं सहायीकर्त्तुं तत्पार्वत्यदेशम्; कुमारसहचराणाञ्च भद्रभटादीनां मध्ये केचित् चन्द्रगुप्तमनुजग्मुः, केचिच्च चाणक्यं परिवव्रुः। ततः षण्मासानन्तरं दाहज्वरेण ममार नन्दवंशः; प्रेरितश्चासौ संवादश्चाणक्येन चन्द्रगुप्ताय तत्सहचरैः। चन्द्रगुप्तश्च आगामिसाफल्यात्साहितः सन् अर्द्धराज्यदानं प्रतिश्रुत्य सैन्यसामन्तसमेतं सहायीकृतपर्वतकेन सहागत्य पाटलिपुत्रमवरुरोध। तदानीं राक्षसेनैव चन्द्रगुप्तवधाय प्रेरितया विषकन्यया (ग)। सहायीभूतो चाणक्यो मारितवान् पर्वतकम्। अथ चन्द्रगुप्तः प्रविश्य पाटलिपुत्रे राजा बभूव। चाणक्योऽपि चन्द्रगुप्तसहचरेण भागुरायणेन रहसि त्रासयित्वा पर्वतकपुत्रं मलयकेतुं नगरान्निष्क्रामयामास। राक्षसश्च निभृतं नगरान्निर्गत्य मलयकेतुना सह सन्धाय तत्संगृहीतेन च महता म्लेच्छादिसैन्येन परिवृतः चन्द्रगुप्तमुच्छेत्तुमुद्यतः। अस्मिन्नवसर एव नाटकारम्भ इति।

(ग) "कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया" इति मुद्राराक्षस-द्वितीयाङ्के राक्षसोक्तिः (१, पद्यम्)। आ जन्मतो विषभक्षणेन विषमयशरीरा संसर्गमात्रेणैव तद्विषवेगसञ्चारेण तत्क्षणात्तत्पुरुषनाशिनी कन्या विषकन्येति। केचित् गूढं विषदायिनी कन्या विषकन्येत्यपरे। कौशलेन विषपूर्णा यन्त्रात्मिका कन्या विषकन्येति चान्ये।

# अथ कविसमयनिरूपणम् ।

मुद्राराक्षसप्रणेतुः कवेर्विशाखदत्तस्य समयनिरूपणे न किञ्चिद्विस्पष्टं प्रमाणमुपलभ्यते ; तथापि तु तन्नातिदुष्करमिव मन्यते । तथा च—

"साध्ये निश्चितमन्वयेन घटितं बिभ्रत् सपक्षे स्थितिं
व्यावृत्तञ्च विपक्षतो भवति यत्तत् साधनं सिद्धये ।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धञ्च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः ॥

एतत् पञ्चमाङ्कगतं पद्यं निर्माय कविना खलु साध्यसाधनान्वयव्याप्तिपरामर्श-पक्षता-हेत्वाभासादिकं नव्यन्यायगतं विविधं विषयं सूचयता सर्वथैवात्मनो नव्यन्यायाभिज्ञता सूचिता । नव्यन्यायप्रवर्त्तकश्च भगवान् गङ्गेशोपाध्यायः । स च स्वकीयतत्त्वचिन्तामणिग्रन्थे (नव्यन्यायमूले) "इति खण्डनकारमतमपास्तम्" इति नैषधचरितकर्त्तृ-श्रीहर्षकृतं खण्डनखण्डग्रन्थं दूषयन्नात्मनः श्रीहर्षात् परवर्त्तित्वमेव सूचयति । श्रीहर्षश्च खृष्टीयद्वादशशताब्दीमध्यभाग एव प्रादुर्भूत इत्यस्माभिर्नैषधचरितमुखबन्धे बहुधा विमृश्य प्रदर्शितम् । ततः खृष्टीयद्वादशताब्द्या मध्यभागे श्रीहर्षः, शेषभागे गङ्गेशो विशाखदत्तश्चाविर्भूत इति प्रतीयते । गङ्गेशविशाखदत्तयोः समसामयिकत्वेऽपि एकदेशवासितया गङ्गेशाद्विशाखदत्तस्य नव्यन्यायज्ञानलाभः सर्वथैव सम्भवति ।

किञ्च यथा उत्तररामचरितनाटके भवभूतिना "शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम्" इति शेषपद्यांशेन अभिधावृत्त्या कवेर्वाल्मीकेरिति, व्यञ्जनावृत्त्या च कवेर्भवभूतेरिति सूचितम् ; तथास्मिन् मुद्राराक्षसे विशाखदत्तेनापि

"म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना संश्रिता राजमूर्त्तेः" इति शेषपद्यांशेन अभिधावृत्त्या राजा चन्द्रगुप्त इति व्यञ्जनावृत्त्या च राजा विशाखदत्त इति सूचितम्। ततश्च चन्द्रगुप्तकाले म्लेच्छैरालेकजाण्डारादिभिराक्रमणोद्योगात्, विशाखदत्त-काले च म्लेच्छैर्महम्मदघोरीप्रभृतिभिरसकृदाक्रमणात् उद्वेज्य-माना भारतभूमिरित्यर्थ एव प्रतीयत इत्यकामेनाप्यवश्यमेवा-ङ्गीकर्त्तव्यम्। महम्मदेन च खृष्टीयद्वादशशताब्दीशेषभाग एव भारतभूमिराक्रान्तेति सर्वेषामेवैतिहासिकानां संवादः। "म्लेच्छैरुद्वेज्यमाना—" इति वर्त्तमानकालनिर्देशाच्च महम्मद-घोरीतः परवर्त्तित्वमपि कवेर्नाशङ्क्यते।

अतः सिद्धं खृष्टीयद्वादशशताब्दीशेषभागे प्रदुर्भूतः कवि-र्विशाखदत्त इति। खष्टपूर्वतृतीयशताब्दीप्रथमभागे इति केचित्। अष्टमशताब्दीमध्यभागे इत्यपरे।

नव्यन्यायप्रवर्त्तको भगवान् गङ्गेशोपाध्यायो मैथिल एवासीदिति प्रायेण सर्वेषामेव मतम्। अतस्तत्सकाशाद्-गृहीतनव्यन्यायविद्यो विशाखदत्तोऽपि विदेहदेशस्यैव तदानीं राजासीदिति च प्रतीयते, राज्ञो विद्यालाभार्थमन्यदेशे गमन-स्यानावश्यकत्वावधारणात् गङ्गेशस्य च मैथिलमातुलावास एव चिरवासश्रवणादिति।

अथच संग्रहश्लोकः—

धीरोदात्तगुणो स नायक इह श्रीचन्द्रगुप्तो नृपः
दर्पान्धः प्रतिनायको मलयकेतुश्चैव धीरोद्धतः।
चाणक्यश्च स राक्षसश्च कथितौ मन्त्री सहायौ तयोः
वीरो नाम रसः, प्रसादगुणको रीतिश्च वैदर्भिका॥

# मुद्राराक्षसम् ।

## प्रथमोऽङ्कः

धन्या केयं स्थिता ते शिरसि, शशिकला, किन्नु नामैतदस्याः,
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुः
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥१॥

अन्वयः—[हे विश्वनाथ ! ] ते शिरसि स्थिता इयं धन्या का ? शशिकला ; एतत् किन्नु अस्याः नाम ? तत् एव अस्याः नाम ; एतत् ते परिचितम् अपि कस्य हेतोः विस्मृतम् ? नारीं पृच्छामि, इन्दुं न ; विजया कथयतु, यदि इन्दुः प्रमाणं न (स्यात्) ; इति देव्याः सुरसरितं निह्नोतुमिच्छोः विभोः शाठ्यं वः अव्यात् ॥१॥

महाविषपिधायिऽपि सन्नतपालिनालङ्कृतीः
तनौ दधदपि स्त्रियं सकलभोगसंवर्जितः ।
भवन्नपि च कामहा भवति यो जगत्कामदः
नमामि तमुमापतिं [illegible] ॥

अलङ्कृता [illegible] हरतां सुधासुधी ।
विधाय टीकां [illegible] राक्षसम् ॥

अथ तत्रभवता कविप्रवरेण [illegible] नाटकस्य निर्विघ्नरचनापरिसमाप्तिं कामयता [illegible] "रङ्गविघ्नोपशान्त्यर्थं नान्दीमादौ प्रयोजयेत्" इत्यालङ्कारिकवचनमनुसृत्य सूत्रधारो रङ्गविघ्ननिवारणार्थं नान्दीतया पठति ।

---

धन्येति । हे विश्वनाथ ! ते तव शिरसि स्थिता इयं धन्या पुण्यवती नारी, का ? इति शिवस्य जटाजूटगतां युवतिमूर्त्तिं गङ्गामुद्दिश्य सपत्नीत्वेनेर्ष्यया शिवं प्रति सरलाया दुर्गायाः प्रश्नः । त्वया विश्वनाथेनैव समादरेण शिरसि समारोपितत्वात् धन्यैवमित्याशयः । शशिकला चन्द्रस्य षोड़शभागैकभागः । इयमपदेन गङ्गाशशिकलयोरुभयोरप्युपस्थितत्वात् दुर्गां प्रतारयितुं चन्द्रकलार्थमादायैव शिवस्योत्तरमिदम् । "शिरश्छिन्देद्यदङ्गनम्" इत्यादौ कण्ठोपरिभागमात्रेऽपि शिरःपदव्यवहारात् जटास्थिताया अपि प्रश्ने ललाटस्थिताया उत्तरसङ्गतिः । एतत् शशिकलेति, किन्तु, अस्याः शिरःस्थितायाः युवत्याः, नाम किं नु ? इति दुर्गाया द्वितीयः प्रश्नः । तदेव शशिकलेत्येव. अस्याश्चन्द्रकलाया नाम । इति शिवस्य द्वितीयमुत्तरम् । एतत् अस्याः शशिकलेति नाम, ते तव, परिचितमपि चिराभ्यासादिदर्शनेनावगतमपि, कस्य हेतोः विस्मृतम् ? इति स्त्रीणां हृढत्वसम्पादनाय दुर्गां प्रत्येव शिवस्य प्रौढः पर्य्यनुयोगः । नारीं स्त्रियं पृच्छामि, किन्तु इन्दुम् इन्दुकलां न, स्त्रीविषय एव मे प्रश्नः, न पुनश्चन्द्रकलाविषय इत्यर्थः ; इति दुर्गायाः स्वप्रश्नविषयनिर्णयः । पुरुषतया शाठ्यसम्भवान्मय्येव चन्द्रेऽपि न विश्वासः, अत एव स्वसमानजातीयतया मारत्येन विश्वास्यत्वात् नारीं पृच्छामीत्युक्तमित्यर्थमादाय शिवः पुनरुत्तरयति कथयत्विति । विजया विजयानाम्नी तवैषैव सखी, कदाचित् मदुक्तेः सत्यासत्यतां ब्रवीतु ; यदि इन्दुकला, अन्यथा वा तत्सत्यासत्यताकथनेऽपि विश्वासो न स्यात् । इति अनेन प्रकारेण, देव्या दुर्गायाः सकाशात्, सुरसरितं गङ्गां निह्नोतुं मानभयेन गोपयितुमिच्छोः, विभोर्व्यापकस्य शिवस्य, शाठ्यं प्रतारणा कर्त्तृ, वो युष्मान् सामाजिकान्, अव्यात् रक्ष्यात् । सर्वशक्तिमतो भगवतः सर्वा क्रियापि तत्सम्बन्धितया तत्प्रसादात् तथैव शक्तिमतीति शाठ्यस्यापि रक्षणयोग्यतेति भावः ।

अत्र दुर्गाया गङ्गार्थकाश्लिष्टवचनस्य शिवेन शशिकलार्थे योजनात् अर्थश्लेषमूला वक्रोक्तिरलङ्कारः । न च व्याजोक्तिरिति वाच्यं गङ्गाया गोपनस्यैवाभावात् । किन्तु "वक्रोक्तौ परोक्तेरन्यथाकारः" इत्यपह्नुतिप्रकरणे दर्पणकारोक्तेः परोक्तिस्थले वक्रोक्तेरेव विशिष्टत्वादिति सुधीभिर्विभावनीयम् । भगवद्विषया रतिर्भावः, प्रसादो गुणः, वैदर्भी रीतिः । एषां प्रमाणानि दर्पणादावनुसन्धेयानि ।

अपि च (क)।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्व्वलोकातिगानाम्।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं (१) बध्नतो दाहभीतेः
इत्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् (२) ॥२॥

---

परिचितं विस्मृतमित्युभयत्रापि बुद्ध्यर्थत्वात् "मतिबुद्धि—" इत्यादिना कर्म्मणि क्तः। अतएव ते इति "वर्त्तमानाधिकरणयोः भावे" इति कर्त्तरि षष्ठी। इच्छार्थस्य दक्षनिपातस्य निष्ठादितया सुरसरितमिति कर्म्मणि षष्ठीनिषेधात् द्वितीयैव। अव्यादित्याशीर्थात्।

अत्र परश्लोके च स्रग्धरा वृत्तम्, "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति लक्षणात् ॥१॥

(क) अपि च अन्यच्च नान्दीवाक्यं पठामीति शेषः; तस्या अष्टपदत्वनिर्व्वाहायेति भावः।

**अन्वयः**—पादस्य स्वैरपातैः आविर्भवन्तीम् अवनेः अवनतिं रक्षतः, सर्व्वलोकातिगानां दोष्णां सङ्कोचेन एव मुहुः अभिनयतः, दाहभीतेः ज्वलनकणमुचम् उग्रां दृष्टिं लक्ष्येषु न बध्नतः त्रिपुरविजयिनः आधारानुरोधात् इति दुःखनृत्यं वः पातु ॥२॥

---

বিশ্বনাথ! তোমার মস্তকস্থিত এই পুণ্যবতীটী কে? শশিকলা। ইহা কি ইহার নাম? ইহাই ইহার নাম। ইহা তোমার বিশেষরূপেই বিদিত ছিল, তথাপি বিস্মৃত হইতেছ কেন? । আমি নারীকে জিজ্ঞাসা করিতেছি, কিন্তু চন্দ্রকে নহে; যদি চন্দ্র তোমার বিশ্বাসের পাত্র না হন, তবে বিজয়াই বলুক; এই ভাবে পার্বতীর নিকটে গঙ্গাকে গোপন করিবার অভিলাষী শিবের শঠতা আপনাদিগকে রক্ষা করুক ॥১॥

(१) उग्रज्वलनकणमुचम्। (२) दुःखनृत्तम्।

पादस्येति। पादस्य जातावेकवचनात् चरणयोरित्यर्थः, स्वैरपातैर्मन्दमन्दविन्यासैः। एतच्च रक्षां प्रत्येव कारणमिति बोध्यम्। आविर्भवन्तीं तीव्रपादक्षेपैरुत्पद्यमानाम्, अवनेः पृथिव्याः, अवनतिम् अधोगमनम्, रक्षतो निवारयतः, स्वैरपातेषु तीव्राघाताभावादिति भावः। सर्वलोकान् भूरादिसप्तभुवनानि अतिगच्छन्ति अत्युच्चतया अतिक्रामन्तीति तेषाम्, दोष्णां बाहूनाम्, सङ्कोचेनैव वक्रीकरणेन मुद्रीकरणेनैव, मुहुर्वारं वारम्, अभिनयतो नृत्यतः; अन्यथा सप्तलोकानामेव भङ्गप्रसङ्ग इत्याशयः। तथा दाहभीतेः द्रष्टव्यपदार्थानामेव दग्धीभवनभयाद्धेतोः, ज्वलनकणागुणम् अग्निमयत्वादग्निस्फुलिङ्गवर्षिणीम्, अतएव उग्रां भीषणाम्, दृष्टिं ललाटस्थं नयनम्, लक्ष्येषु द्रष्टव्यपदार्थेषु, न बध्नतो न सन्दधतः न निक्षिपत इत्यर्थः, त्रिपुरविजयिनः सद्यःकृतत्रिपुरासुरवधस्य शिवस्य, आधाराणां पादपातादाश्रयाणाम् अवनिसर्वलोकलक्ष्याणाम् अनुरोधात् रक्षणाभिप्रायात्, इति इत्थम्, दुःखनृत्यं यथेच्छव्यवहारकरणासामर्थ्यात् कष्टेन नर्त्तनं कर्त्तृ, वो युष्मान् सभ्यान्, पातु रक्षतु। पूर्ववदेव भावः।

अत्र अवन्यादीनामवनत्यादासम्बन्धेऽपि तत्तत्सम्बन्धादतिशयोक्तिः, उग्रत्वं प्रति ज्वलनेत्यादिपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, प्रथमे पादे छेकानुप्रासः, चतुर्थे च वृत्त्यनुप्रास इत्येतेषां मिथो निरपेक्षतया संसृष्टिः। भावादयः पूर्ववत्।

"मन्दस्वच्छन्दयोः स्वैरम्" इत्यमरः ॥२॥

---

মহাদেব ত্রিপুরাসুরকে বধ করিয়া নৃত্য করিতেছিলেন; তখন যদি তিনি তীব্র পাদক্ষেপ করিয়া নৃত্য করেন, তবে পৃথিবী রসাতলে যায়; তাই তিনি আস্তে আস্তে পাদক্ষেপ করিয়া পৃথিবীর অধোগমন নিবারণ কবিতেছিলেন এবং সমস্তভুবনাতিবর্ত্তী বাহুগুলিকে প্রসারিত করিয়া নৃত্য করিলে, সমস্ত ভুবনই ভাঙ্গিয়া যায়; এই ভয়ে সে বাহুগুলিকে সঙ্কুচিত করিয়া অবিরত নৃত্য করিতেছিলেন আবার অগ্নিস্ফুলিঙ্গবর্ষী ভয়ঙ্কর ললাটনয়ন নিক্ষেপ করিলে দগ্ধ হইয়া

নান্দ্যন্তে সূত্রধারঃ (খ)। অলমতিপ্রসঙ্গেন। আজ্ঞাপিতোঽস্মি

---

(খ) নান্দ্যন্ত ইতি। নন্দয়তি আনন্দয়তি অনেন দেবাদীন্ আশিষা বা সভ্যানিতি ণ্যন্তনন্দধাতোঃ পচাদিত্বাদচি নন্দা ইতি রূপম্; ততশ্চ নন্দৈব নান্দীতি প্রজ্ঞাদিত্বাৎ স্বার্থে অণি স্ত্রিয়াঙ্ঙীপ্রত্যয়ঃ। সা চ স্তুত্যাশীরন্যতরপরা বাক্ ইত্যালঙ্কারিকসম্প্রদায়সিদ্ধা রূঢ়িঃ। তথা চ সাহিত্যদর্পণে—

"আশীর্বচনসংযুক্তা স্তুতির্যস্মাৎ প্রযুজ্যতে।
দেবদ্বিজনৃপাদীনাং তস্মান্নান্দীতি সংজ্ঞিতা॥
মঙ্গল্যশঙ্খচন্দ্রাব্জ-কোক-কৈরবশংসিনী।
পদৈর্যুক্তা দ্বাদশভিরষ্টাভির্বা পদৈরুত॥"

অত্র চ সভ্যানামাশীঃ, শশিকলেত্যনেন চ চন্দ্রস্য সংশিতত্বং বোধ্যম্।

শ্লোকয়োরেকৈকঃ পাদ এব একৈকং পদম্। তেন চেয়মষ্টপদা নান্দী। তথা চোক্তং নাট্যপ্রদীপে—

"শ্লোকপাদঃ পদং কেচিৎ সুপ্তিঙন্তমথাপরে।
পরেঽবান্তরবাক্যৈকস্বরূপং পদমূচিরে॥"

তথা ত্রিপুরবিজয়িন ইত্যনেন নন্দবিজয়ী চাণক্যঃ, পাদস্যেত্যনেন তদীয়বুদ্ধিপ্রভাবঃ, সর্বলোকাতিগানাং দোষ্ণামিত্যনেন তদীয়নীতিকৌশলম্, ভয়াং দৃষ্টিমিত্যনেন চ তদীয়ো ভীষণঃ ক্রোধঃ সূচ্যতে। অতএবেয়ং পত্রাবলী নাম নান্দী। তদুক্তং নাট্যদর্পণে—

"যস্যাং বীজস্য বিন্যাসো হ্যভিধেয়স্য বস্তুনঃ।
শ্লেষেণ বা সমাসোক্ত্যা নান্দী পত্রাবলীতি সা॥"

এবম্ভূতায়া নান্দ্যা অন্তে পাঠাবসানে, সূত্রধারঃ প্রধাননটঃ, ব্রবীতীতি শেষঃ। ইত্যন্যত্রাপি ব্রবীতীত্যধ্যাহর্তব্যক্রিয়ায়াঃ কর্তরি প্রথমা বোধ্যা। সূত্রং নাটকীয়কথামূলং ধারয়তীতি সূত্রধারঃ। তথা চোক্তম্—

যাইবে, এই ভয়ে সে নয়নকে দ্রষ্টব্যবস্তুর উপরে নিক্ষেপই করিতেছিলেন না। অতএব পৃথিবীপ্রভৃতি আধার পদার্থগুলির রক্ষার ইচ্ছায় মহাদেবের এইরূপ দুঃখনৃত্য আপনাদিগকে রক্ষা করুক॥২॥

परिषदा, यथाद्य त्वया सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेर्विशाखदत्तस्य कृतिरभिनवं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति (ग)। यत् सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि सुमहान् परितोषः प्रादुर्भवति। कुतः—(घ)

---

"नाटकीयकथासूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते॥"

(ग) अलमिति। अतिप्रसङ्गेन एतदधिकाया द्वादशपदाया नान्द्याः प्रयोगेण, अलं तादृशनान्दीप्रयोगो व्यर्थ इत्यर्थः; द्वादशाष्टपदनान्दीप्रयोगेणैव कर्त्तव्याया आशिषो निर्वाहादिति भावः। परिषदा विद्वत्सभया। तथा च मनुः—

"त्रैविद्यो हैतुकस्तर्को नैरुक्तो धर्म्मपाठकः।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा॥"

सामन्तो भूम्यधीश्वरो यो वटेश्वरदत्तो नाम तस्य पौत्रस्य। "सामन्तः स्यादधीश्वरः" इत्यमरः। महाराजपदभाक् महाराजोपाधिधारी यः पृथुर्नाम तस्य सूनुः पुत्रस्तस्य। क्रियत इति कृतिस्तत्कृतमित्यर्थः। मुद्रया गृहीतो राक्षसो नामामात्यो यत्र तन्मुद्राराक्षसम्। मध्यपदलोपी समासः। राक्षसग्रहणस्यैवात्र प्रधानविषयत्वात् तदेव नाम; "नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम्" इत्यालङ्कारिकोक्तेर्युक्तत्वात्। नाटयितव्यम् अभिनेतव्यम्। इति आज्ञापितोऽस्मीत्यन्वयः।
"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम्" इत्यादि नाटकलक्षणमुन्नेयम्।

(घ) यत् सत्यमिति। यत्सत्यमित्येकमेवाव्ययं भृशार्थे। काव्यस्य विशेषं भेदं तारतम्यं वेत्तीति तस्याम्। अतएव समीचीना समालोचनैव भविष्यतीति भावः। प्रयुञ्जानस्य अभिनयतः। प्रादुर्भवति उत्पद्यते। तत्र कारणमाह कुत इति।

---

[খ-গ-ঘ] [নান্দীপাঠের পর সূত্রধার বলিতে লাগিল] ইহা অপেক্ষা অধিক নান্দীপাঠ অনর্থক। সভ্যগণ আমাকে আদেশ করিয়াছেন যে,

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥३॥

अन्वयः—बालिशस्य अपि कृषिः सत्क्षेत्रपतिता (सती) चीयते । शालेः स्तम्बकरिता वप्तुः गुणं न अपेक्षते ॥३॥

चीयत इति । बालिशस्य कृषिकर्म्मानभिज्ञस्य जनस्यापि, कृषिः शस्योत्पादनीपयोगिबीजरोपणादिक्रिया, सत्क्षेत्रे उर्व्वरभूमौ, पतिता सती, चीयते स्वयमेव वर्द्धते । ननु कथमाकारणात् बालिशस्य कृषिः शस्यं चीयत इत्याह शालेर्धान्यस्य, स्तम्बकरिता गुच्छकारिता गुच्छबन्धनेन वृद्धिरित्यर्थः, वप्तुर्बीजरोपकस्य, गुणमुत्कर्षम्, न अपेक्षते न प्रयोजयति । तथा च बालिशस्यापि कृषिर्यथा सत्क्षेत्रपतिता सती तत्क्षेत्रगुणैनैव चीयते ; तथाभिनयानभिज्ञस्य ममाभिनयोऽपि काव्यनिर्विशेषविदित्यर्थाभस्यां सभायां पतितः सन् सभागुणैनैव उत्कर्षं लप्स्यते । अतएव मम सुमहान् परितोषः प्रादुर्भवतीति भावः ।

अतएवात्र अप्रस्तुताद्वालिशसामान्यात् प्रस्तुतस्य सूत्रधाररूपबालिशस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, कारणेन कार्य्यसमर्थनरूपो वैधर्म्यार्थान्तरन्यासश्च, अनयोरङ्गाङ्गिभावेन सङ्करः । प्रसादो गुणः, वैदर्भी च रीतिः ।

चीयत इति कर्म्मकर्त्तरि प्रयोगः । स्तम्बं करोतीति स्तम्बकरि "इः स्तम्बशकृतोः" इति करोतेरिप्रत्ययः । पथ्यावक्त्रं वृत्तम् ॥३॥

---

আজ জমীদার বটেশ্বরদত্তের পৌত্র এবং মহারাজ পৃথুর পুত্র কবি বিশাখদত্তের রচিত নূতন মুদ্রারাক্ষসনামক নাটক তুমি অভিনয় করিবে। নিশ্চয়ই কাব্যের তারতম্যাভিজ্ঞ সভায় অভিনয় করিতে প্রবৃত্ত হওয়ায় আমারও গুরুতর আনন্দ জন্মিয়াছে। কারণ—

মূর্খ লোকের কৃষিও উর্বর ভূমিতে পতিত হইলে, সে বৃদ্ধি পাইয়া থাকে। কারণ, ধান্যের গুচ্ছ বান্ধিয়া বৃদ্ধি পাওয়া, বীজবোপকের গুণের অপেক্ষা করে না ॥৩॥

তদ্‌যাবদিদানীং গৃহং গত্বা গৃহিণীমাহূয় গৃহজনেন সহ সঙ্গীতকমনুতিষ্ঠামি (ঙ)। পরিক্রম্যাবলোক্য চ। ইমে নো গৃহাঃ, তদ্‌যাবৎ প্রবিশামি (চ)। নাট্যেন প্রবিশ্যাবলোক্য চ। অয়ে, তৎ কিমিদমস্মদ্‌গৃহেষু মহোৎসব ইব দৃশ্যতে। স্বস্বকর্ম্মণ্যধিকতরমভিযুক্তঃ পরিজনঃ। তথাহি—(ছ)

বহতি জলমিয়ং পিনষ্টি গন্ধান্
ইয়মিয়মুদ্‌গ্রথতে স্রজো বিচিত্রাঃ।
মুসলমিদমিয়ঞ্চ পাতকালে
মুহুরনুযাতি কলেন হুঙ্কৃতেন ॥৪॥

---

(ঙ) তদিতি। তস্মাৎ পারিষদা আজ্ঞাপিতত্বাদিত্যর্থঃ। যাবদিতি বাক্যালঙ্কারে। গৃহিণীং গৃহস্য কর্ত্রীং নিজভার্য্যামিত্যর্থঃ। সঙ্গীতকমিত্যাদরে কপ্রত্যয়ঃ।

(চ) পরীতি। পরিক্রম্য গৃহগমনার্থং পাদং প্রক্ষিপ্য। নঃ অস্মাকম্। "গৃহাঃ পুংসি চ ভূম্নৈব" ইত্যভিধানাদ্ গৃহা ইতি পুংস্ত্বম্।

(ছ) নাট্যেনেতি। নাট্যেন অভিনয়প্রকারেণ, বাস্তবিকসূত্রধারগৃহাভাবাৎ গৃহপ্রবেশাভিনয়ং প্রদর্শ্যেত্যর্থঃ। অয়ে ইতি বিস্ময়ে। ইদমিতি দর্শনক্রিয়াবিশেষণম্। স্বস্বকর্ম্মণি নিজনিজযোগ্যকার্য্যে, অভিযুক্তঃ অভিনিবিষ্টঃ। অভিযোগং দর্শয়িতুমাহ তথাহীতি।

**অন্বয়ঃ**—[illegible]ং বহতি, ইয়ং গন্ধান্ পিনষ্টি, ইয়ং বিচিত্রাঃ স্রজঃ উদ্‌গ্রথতে। ইয়ঞ্চ পাতকা[illegible] হুঃ কলেন হুঙ্কৃতেন ইদং মুসলম্ অনুযাতি ॥৪॥

[ঙ চ-ছ] [illegible] এখন ঘরে যাইয়া, গৃহিণীকে ডাকিয়া, ঘরের লোকের [illegible]ঙ্গে মিলিয়া, সঙ্গীত [কন্‌সার্ট] করি। [কতিপয় পদক্ষেপ করিয়া এবং দেখিয়া] এই আমাদের ঘর; অতএব প্রবেশ করি। (অভিনয়ের ধরণে প্রবেশ করিয়া এবং দেখিয়া) অ্যা! তবে আমাদের ঘরে মহোৎসবের ন্যায় এই কি দেখিতেছি। পরিজনবর্গ নিজনিজকার্য্যে অত্যন্ত অভিনিবিষ্ট হইয়াছে। তাহাই বলিতেছি—

भवतु । कुटुम्बिनीमाहूय पृच्छामि । नेपथ्याभिमुखमवलोक्य (ज) ।
गुणवत्युपायनिलये ! स्थितिहेतो ! साधिके ! त्रिवर्गस्य ।
मद्भवननीतिविद्ये ! कार्य्याचार्य्ये ! द्रुतमुपेहि ॥५॥

वहतीति । इयम् अङ्गुल्या निर्दिष्टा काचिन्नारी, जलम्, वहति कलसादिना आनयति । इयं तथैव नारी, गन्धान् कर्पूरादीनि गन्धद्रव्याणि, पिनष्टि चूर्णयति । इयं नारी, विचित्रा नानाविधाः, स्रजः पुष्पमालाः, उद्ग्रथते ग्रथ्नाति । इयं नारी च, पातकाले मुसलस्यैव पतनसमये, मुहुर्वारं वारम्, कलेन मधुरास्फुटेन, हुङ्कृतेन 'हुम्' इति शब्देन, इदं मुसलं मुसलशब्दमित्यर्थः, अनुयाति अनुकरोति । अतएव स्वस्वकर्म्मण्यधिकतरमभियुक्ता इति भावः ।

अत्र द्वितीयार्द्धे दुरूहस्वक्रियारूपवर्णनात् स्वभावोक्तिरलङ्कारः । प्रसादो गुणः, वैदर्भी च रीतिः ।

पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥४॥

(ज) भवत्विति । भवतु ईदृशव्यापार इति शेषः । कुटुम्बिनीं गृहिणीम्, "स्यात्तु कुटुम्बिनी । पुरन्ध्री" इत्यमरः । नेपथ्यं वेशरचनस्थानम्, तदभिमुखावलोकनं तत्रत्यनटीसम्बोधनार्थम्, तथैव लोकव्यवहारात् ।

अन्वयः—(हे) गुणवति ! (हे) उपायनिलये ! (हे) स्थितिहेतो ! (हे) त्रिवर्गस्य साधिके ! (हे) मद्भवननीतिविद्ये ! (हे) कार्य्याचार्य्ये ! द्रुतम् उपेहि ॥५॥

दुष्करेऽपि स्वकर्त्तव्ये अनायासेन प्रवर्त्तनार्थं स्तुतिविषया नटीं सम्बोधयति गुण

ইনি জল আনিতেছেন, ইনি গন্ধদ্রব্য চূর্ণ করিতেছেন, ইনি নানাবিধ মালা গাঁথিতেছেন, আর ইনি মুসল পড়িবার সময়ে মধুর ও অস্পষ্ট 'হুং হুং' শব্দ দ্বারা বার বার এই মুসলশব্দের অনুকরণ করিতেছেন ॥৪॥

[জ] হউক ; গৃহিণীকে ডাকিয়া জিজ্ঞাসা করি। [নেপথ্যের দিকে চাহিয়া]

(৫) উপায়নিলয ! স্থিতিহেতোঃ··· । কার্য্যাদার্য্যে । ··· ।

प्रविश्य नटी। अज्जउत्त! इअम्हि, अणाणिओएण मं अणु-गेह्णदु अज्जो। (आर्य्यपुत्र! इयमस्मि आज्ञानियोगेन मामनुगृह्णातु आर्य्यः) (झ)।

---

वतीति। हे गुणवति! नृत्यगीतादिर्नैपुण्यरूपगुणशालिनि! अतएवाभिनयोपयोगिनीति भावः। उपायनिलये! उपायानां नाट्यसौष्ठवसाधनव्यापाराणां निलयोऽवस्थितिर्यस्यां तत्सम्बोधनम्। तेन तवावागमनमत्यावश्यकमित्याशयः। स्थितिकृती! अभिनयादिनैपुण्येन मदीयमर्य्यादारक्षिके! ततोऽपि तवावश्यकतेत्यभिप्रायः। त्रिवर्गस्य मदीयधर्म्मार्थकामानाम्, साधिके! सम्पादिके!। तेन च सर्व्वत्रैव तव प्रयोजनमिति तात्पर्य्यम्। मद्भवनस्य मम गृहस्य कौशलसम्पादनात् नीतिविद्येव तत्सम्बोधनम्। ततश्चाभिनयकौशलोपदेशायापि तवोपस्थितिः प्रयोजनीयेति भावः। कार्य्याचार्य्ये! सर्व्वकर्त्तव्योपदेशिके!। तेन च कर्त्तव्यसभ्यसन्तोषोपायोपदेशायापि तवागमनं नितान्तावश्यकमित्याशयः। द्रुतं सत्वरम्, उपेहि अवागच्छ।

अत्र विशेषणानां साभिप्रायप्रयोगात् परिकरो नामालङ्कारः, "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात्। न च विषयभेदे उल्लेखालङ्कार इति वाच्यम्, तत्र रूपकातिशयोक्त्यन्यतरयोगस्यावश्यकत्वात् अत्र तु तदभावात्।

आर्य्या जातिः, "यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।

अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या" इति लक्षणात् ॥५॥

(झ) प्रविश्येति। आराद्दूरं यातः पापेभ्यः इत्यार्य्यः, पृषोदरादित्वान्निपातः। तथा चोक्तं "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः।" तेन आर्य्यः पूज्यः श्वशुर इति यावत् तस्य पुत्र इति तत्सम्बोधनम्। इयमस्मि आगतेति शेषः, आज्ञानियोगेन आदेशदानेन।

"वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति दर्पणादिनियमात् नटी सूत्रधारमार्य्यनाम्ना वदति। एवं सूत्रधारोऽपि नटीम। शिक्षितत्वादनीचत्वाच्च नटी सौरसेनीं

গুণবতি! উপায়ের আধার! মর্য্যাদারক্ষিণি! ত্রিবর্গসাধিকে! মদ্গৃহের নীতিবিদ্যাতুল্যে! কর্ত্তব্যোপদেশিনি! দ্রুত আগমন কর ॥৫॥

সূত্রধারঃ। আর্য্যে ! তিষ্ঠতু তাবদাজ্ঞানিয়োগঃ। কথয়, কিমদ্য ভবত্যা তত্রভবতাং ব্রাহ্মণানামুপনিমন্ত্রণেন কুটুম্বকমনুগৃহীতম্ ? অভিমতা বা ভবনমতিথয়ঃ সম্প্রাপ্তাঃ ; যত এষ পাকবিশেষারম্ভঃ (জ)।

নটী। অজ্জ ! আমন্তিদা মএ ভঅবন্তো বম্হণা।
(আর্য্য ! আমন্ত্রিতা ময়া ভগবন্তো ব্রাহ্মণাঃ) (ট)।

সূত্রধারঃ। কথয় কস্মিন্নিমিত্তে ? (ঠ)।

---

ভাষা বদতি, "শৌরসেনী প্রযোক্তব্যা তাদৃশীনাঞ্চ যোষিতাম্" ইতি দর্পণব্যবস্থাপনাৎ। অন্যাবাচ্যেত্যমূলম্।

(জ) সূত্রেতি। তত্রভবতাং পূজ্যানাম্। "তিষু তত্রভবান্ পূজ্যস্তথৈবাত্রভবানপি" ইত্যজয়ঃ। কুটুম্বকং পুত্রাদিপোষ্যবর্গঃ। "কুটুম্বঃ পোষ্যবর্গেঽপি" ইত্যমরমালা। অনুগৃহীতং তেষাং ব্রাহ্মণানামাশীঃসম্পাদনেনেতি ভাবঃ। অভিমতাঃ পুণ্যপ্রদত্বেন প্রার্থিতাঃ সম্প্রাপ্তাঃ স্বয়মেবোপস্থিতাঃ।

(ট) নটীতি। আমন্ত্রিতা আহূতাঃ। ভগবন্তো মাহাত্ম্যবন্তঃ।

(ঠ) সূত্রেতি। কস্মিন্ নিমিত্তে স্থিতে কেন হেতুনেত্যর্থঃ।

---

[ঝ] নটী [প্রবেশ করিয়া]। আর্য্যপুত্র ! এই আমি আসিয়াছি ; আদেশ দান করিয়া আপনি আমাকে অনুগৃহীত করুন।

[ঞ] সূত্রধার। আর্য্যে ! আদেশদান থা'ক। বল—আজ তুমি কি জন্য মাননীয় ব্রাহ্মণগণের নিমন্ত্রণ দ্বারা পরিজনবর্গকে অনুগৃহীত করিয়াছ ? অথবা অভীষ্ট অতিথিগণ নিজেরাই আমার বাড়ীতে উপস্থিত হইয়াছেন ? যেহেতু বিশেষরূপে পাক আরম্ভ হইয়াছে।

[ট] নটী। আর্য্য ! আমিই মাহাত্ম্যশালী ব্রাহ্মণগণকে নিমন্ত্রণ করিয়াছি।

সূত্রধার। বল, কি নিমিত্তে ?।

নটী। উবরজ্জদি কিল ভঅবং চন্দো ত্তি। (উপরজ্যতে কিল ভগবান্ চন্দ্র ইতি) (ড)।

সূত্রধারঃ। ক এবমাহ ? (ঢ)

নটী। এবং কলু ণঅরবাসী জণো মন্তেদি। (এবং খলু নগর-বাসী জনো মন্ত্রয়তে) [ণ]।

সূত্রধারঃ। আর্য্যে ! কৃতশ্রমোঽস্মি চতুঃষষ্ট্যঙ্গে জ্যোতিঃশাস্ত্রে। তৎ প্রবর্ত্ত্যতাং ভগবতো ব্রাহ্মণানুদ্দিশ্য পাকঃ; চন্দ্রোপরাগং প্রতি তু কেনাপি বিপ্রলব্ধাসি। পশ্য—(ত)।

"ক্রূরগ্রহঃ স কেতুশ্চন্দ্রমসম্পূর্ণমণ্ডলমিদানীম্।
অভিভবিতুমিচ্ছতি বলাৎ—

---

[ড] নটীতি। উপরজ্যতে রাহুগ্রস্তো ভবতি, ভবিষ্যৎসামীপ্যে বর্ত্তমানা; তেন চন্দ্রগ্রহণং ভবিষ্যতীতি নিমিত্তে ইত্যর্থঃ। "উপরাগো গ্রহঃ" ইত্যমরঃ।

[ঢ] সূত্রেতি। আহ ব্রবীতি।

[ণ] নটীতি। মন্ত্রয়তে ব্রবীতি পরস্পরমালোচয়তীত্যর্থঃ।

[ত] সূত্রেতি। চতুঃষষ্টিঃ অঙ্গানি গ্রহাবস্থানাদয়ঃ প্রতিপাদ্য বিষয়া যস্য তস্মিন্, জ্যোতিঃশাস্ত্রে, কৃতঃ শ্রমঃ শিক্ষায়াসো যেন স তাদৃশঃ। প্রবর্ত্ত্যতাং পাকঃ নিমন্ত্রণ-নিবর্ত্তনস্যান্যায্যত্বাৎ চন্দ্রগ্রহণাভাবেঽপি ব্রাহ্মণভোজনেনৈব পুণ্যসম্ভবাদিতি ভাবঃ। চন্দ্রোপরাগং প্রতি চন্দ্রগ্রহণবিষয়ে। বিপ্রলব্ধা প্রতারিতা। পশ্য জানীহীত্যর্থঃ।

---

(ড) নটী। চন্দ্রগ্রহণ হইবে এই নিমিত্তে।

(ঢ) সূত্রধার। কে এরূপ বলিয়াছে ?

(ণ) নটী। নগরবাসী লোকেরা এইরূপ বলিতেছে।

(ত) সূত্রধার। আর্য্যে ! আমি চৌষট্টি অঙ্গযুক্ত জ্যোতিঃশাস্ত্রে পরিশ্রম করিয়াছি। অতএব, মাহাত্ম্যশালী ব্রাহ্মণগণের উদ্দেশ্যে পাক আরম্ভ করাইয়া দাও; কিন্তু চন্দ্রগ্রহণের বিষয়ে তুমি কাহারও দ্বারা প্রতারিত হইয়াছ। দেখ—

नेपथ्ये—आः ! क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति बलात् ? (थ) । (१)

सूत्रधारः । ——रक्षत्येनन्तु बुधयोगः ॥६॥

---

(थ) नेपथ्य इति। आ इति कोपसूचकमव्ययम । अत्रापि चन्द्रं चन्द्रगुप्तम् ।

**अन्वयः**—क्रूरग्रहः सः केतुः इदानीं पूर्णमण्डलं चन्द्रमसं बलात् अभिभवितुम् इच्छति ; बुधयोगः तु एनं रक्षति ॥६॥

क्रूरेति । क्रूरः अशुभसूचनेन निष्ठुरस्वभावो ग्रहश्चेति क्रूरग्रहः, स प्रसिद्धः, केतुः केतुनामकग्रहसम्बन्धोर्द्धभागी राहुरित्यर्थः, इदानीम् अद्य रात्रौ पूर्णिमावसानसमये "पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी" इति स्मृतेः, पूर्णमण्डलं निरवशेषावयवम्, चन्द्रमसं चन्द्रम्, बलात् स्वशक्तेरेव, अभिभवितुं पराजेतुं पराजयेन ग्रसितुमित्यर्थः, इच्छति ; तु किन्तु, बुधस्य सौम्यग्रहस्य योगः संयोगः, एनं चन्द्रमसम्, रक्षति राहोरभिभवात् त्रायते ; "ग्रहपञ्चकसंयोगं दृष्ट्वा न ग्रहणं वदेत् । यदि न स्याद्बुधस्तत्र युक्तं दृष्ट्वा ग्रहं वदेत् ॥" इति व्याससंहितावचनादिति भावः । अतएवाद्य चन्द्रग्रहणं न भविष्यति ; तत एव तच्चन्द्रग्रहणोक्त्या केनापि त्वं विप्रलब्धासीति समुदायाशयः ।

तथा क्रूरः कठिनः कठिनत्वादभङ्गुर इत्यर्थः ग्रहोऽभिनिवेशो यस्य सः, राक्षस इत्यर्थः, केतुना मलयकेतुना सहेति सकेतुः सन् मलयकेतुं सहायीकृत्येति तात्पर्य्यम्, इदानीम्, असम्पूर्णमत्राभिषिक्तत्वात् साकल्येनानायत्तं मण्डलं राज्यं यस्य तम्, चन्द्रं चन्द्रगुप्तम् बलात्, अभिभवितुं पराजेतुमिच्छति ; तु किन्तु, बुधस्य पण्डितस्य चाणक्यस्य योगः सम्मेलनम् अथवा कूटनीतिप्रयोगरूप उपायः, एनं चन्द्रगुप्तम्, रक्षति ।

अयं द्वितीयार्थस्तु शब्दशक्तिमूलो वस्तुध्वनिरेव, न पुनः श्लेषः ; अप्राकरणिकत्वात् उभयोरप्यर्थयोः प्राकरणिकत्व एव श्लेषसम्भवात् ? ।

---

[थ] নেপথ্যে—আঃ ! এ কে হে, আমি থাকিতে চন্দ্রগুপ্তকে বলপূর্ব্বক পরাজিত করিতে ইচ্ছা করিতেছে ।

---

[१] इत्यर्द्धोक्ते नेपथ्ये इति, आः ? क एष मयि स्थिते इति मात्रञ्च पाठान्तरम् ।

नटी। अज्ज ! को उण एसो धरणिगोअरो भविअ चन्दं गहाभिजोआदो रक्खिदुं इच्छदि ?। (आर्य्य ! कः पुनरेष धरणिगोचरो भूत्वा चन्द्रं ग्रहाभियोगात् रक्षितुमिच्छति) (द)।

सूत्रधारः। आर्य्ये यत्सत्यं मयापि नोपलक्षितः। भवतु। भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये। (क्रूरग्रह इत्यादि पुनस्तदेव पठति ) (ध)।

---

"ग्रहशब्दः सूर्य्यादिषु भूतादिष्वभिनिवेशे च" इति हलायुधः। "योगः सन्नहनोपाय-ध्यानसङ्गतियुक्तिषु" इत्यमरः। द्वितीयपक्षे "एकदेशेन समुदायो गम्यते" इति न्यायात् केतुपदेन मलयकेतुः चन्द्रपदेन च चन्द्रगुप्त उपस्थाप्यते।

आर्य्या जातिः ॥६॥

(द) नटीति। धरणिः पृथिव्येव गोचरो विचरणादिविषयो यस्य सः, पृथिवीस्थित एवेत्यर्थः। ग्रहाभियोगात् राहोर्ग्रहणरूपादाक्रमणात्। पृथिवीस्थितस्य जनस्य सुदूराकाशवर्त्ति चन्द्रग्रहणनिवारणेच्छा असम्भवेति भावः। सविस्मयोक्तिरियम्।

(ध) सूत्रेति। यत्सत्यं ध्रुवम्। नोपलक्षितः मनोयोगाभावान्नावगतः। भूयः पुनरपि, अभियुक्तः अभिनिविष्टो दत्तमनोयोग इति यावत्, स्वरव्यक्तिं कण्ठध्वनिवैशिष्ट्यम्, उपलप्स्ये परिचेष्यामि। स्वरपरिचयेन च लोकपरिचयो भविष्यतीति भावः। पूर्वमपि क्रूरेत्यादिपाठानन्तरमेव 'आः क एषः" इत्याद्यभिधानात् पुनस्तदभिधापयितुं क्रूरेत्यादिपाठ एवोपाय इति विभाव्य क्रूरग्रह इत्यादि पुनः पठतीति बोध्यम्।

---

সেই ক্রূরগ্রহ রাহু আজ রাত্রিতে পূর্ণমণ্ডল চন্দ্রকে বলপূর্ব্বক পরাজিত করিতে ইচ্ছা করিতেছে বটে; কিন্তু বুধের যোগ ইহাকে রক্ষা করিতেছে ॥৬॥

[দ] নটী। আর্য্য ! এ কোন্ লোক ভূতলে থাকিয়া, গ্রহণরূপ রাহুর আক্রমণ হইতে চন্দ্রকে রক্ষা করিতে ইচ্ছা করিতেছে ?

[ধ] সূত্রধার আর্য্যে ! সত্যই আমিও বুঝিতে পারি নাই। হউক; পুনরায় মনোযোগ দিয়া কণ্ঠস্বর অনুসারে লোকটাকে চিনিয়া লইব। [পুনরায় সেই "ক্রূরগ্রহ" ইত্যাদি শ্লোক পাঠ করিতে লাগিল]

नेपथ्ये । आः ! क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ? ।

सूत्रधारः । आकर्ण्य । आर्य्ये ! ज्ञातम्, कौटिल्यः (न) ।

नटी । भयं नाटयति (प) ।

सूत्रधारः । कौटिल्यः कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्यवैति ॥७॥

---

(न) सूत्रेति । ज्ञातं कण्ठध्वनिपरिचयादवगतम्, कौटिल्यश्चाणक्य एवेदं वदतीति शेषः ।

(प) नटीति । नाटयति गात्रकम्पादिना अभिनयति ; कौटिल्यस्य नितान्तक्रूरत्वात् क्रूरग्रह इत्यादिना च तद्विरुद्धकथनादित्याशयः ।

अन्वयः—एषः सः कुटिलमतिः कौटिल्यः ; येन क्रोधग्नौ प्रसभं नन्दवंशः अदाहि । (स च) चन्द्रस्य ग्रहणम् इति श्रुतेः सनाम्नः मौर्य्येन्दोः द्विषदभियोगः इति अवैति ॥७॥

ननु कोऽसौ कौटिल्य इत्याह कौटिल्य इति । एष सः, कुटिलमतिर्वक्रबुद्धिः, कौटिल्यश्चाणक्यः । येन कौटिल्येन, आत्मनः क्रोध एवाग्निस्तस्मिन्, प्रसभं बलेन, नन्दस्य वंशः कुलमेव वंशो वेणुराशिः सः, अदाहि दग्धः । स चायम्, चन्द्रस्य ग्रहणमिति श्रुतेः मन्मुखतः श्रवणाद्धेतोः, समानं चन्द्रगुप्तेति चन्द्रस्य सदृशं नाम यस्य तस्य सनाम्नः, मौर्य्यश्चन्द्रगुप्त इन्दुश्चन्द्र इव तस्य, द्विषता शत्रुणा अभियोग आक्रमणम्, इति अवैति बुध्यते ; चन्द्रस्य ग्रहणमित्यस्य उभयार्थबोधकत्वात् विपक्षकर्त्तृकचन्द्रगुप्ताक्रमणोद्योगश्रवणाच्चेति भावः ।

[न] সূত্রধার [শ্রবণ করিয়া] আর্য্যে ! বুঝিতে পারিয়াছি, চাণক্য ।

(প) নটী । ভয় অভিনয় করিতে লাগিল ।

तदित आर्य्ये गच्छावः । इति निष्क्रान्तौ । [फ]

## प्रस्तावना (ब) ।

अत्र क्रोधे आग्नत्वारोपो नन्दकुले वंशत्वारोपे निमित्तं वंशशब्दस्य श्लिष्ट इति श्लिष्टपरम्परितं रूपकमलङ्कारः ।

प्रहर्षिणी नाम वृत्तम्—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात् ॥७॥

(फ) तदिति । तस्मात् क्रूरग्रह इत्यादौ ममैव क्रूरग्रहस्य समीपे क्रोधपावकस्य मम स्थातुमयुक्तत्वादित्यर्थः । निष्क्रान्तौ नटीसूत्रधाराविति शेषः ।

(ब) प्रस्तावनेति । प्रस्तूयते प्रस्तुतविषय उत्थाप्यते अनयेति प्रस्तावना प्रस्तुतविषयोत्थापिका वाक्यावली । तथा च दर्पणे—

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥"

सा चेयमुद्घात्यकरूपा साहित्यदर्पण एवोदाहृता । तथा च "क्रूरग्रहः" "सकेतुः" "चन्द्रमसम्पूर्णमण्डलम्" इत्येतानि त्रीणि स्वानवगतवक्तृसम्मतार्थानि पदानि यथाक्रमं 'क्रूरबुद्धिः' 'मलयकेतुसहितः' 'साकल्येनानायत्तराज्यं चन्द्रगुप्तम्' इत्येतेषु त्रिषु स्वाभिप्रेतार्थेषु "चन्द्रगुप्तमभिभवितुमिच्छति" इति गुप्तपदान्वितचन्द्रादोल्लेखेन योजयित्वा चाणक्यः प्रविष्ट इति । यथा दर्पणे—

"पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥"

এই সেই কুটিলবুদ্ধি চাণক্য ; যিনি বলপূর্ব্বক আপন ক্রোধবহ্নিতে নন্দবংশকে দগ্ধ করিয়াছেন। বর্ত্তমান সময়ে 'চন্দ্রের গ্রহণ' এইরূপ শ্রবণ করায় সমাননামা চন্দ্রগুপ্তের শত্রুকর্ত্তৃক আক্রমণ ইহা ইনি বুঝিয়াছেন ॥৭॥

ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः (भ)।

चाणक्यः। कथय, क एष मयि स्थिते चन्द्रगुप्तमभिभवितु-मिच्छति बलात् (म)।

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।

---

(भ) तत इति। ततो नटीसूत्रधारयोर्निष्क्रमणानन्तरम्। एतदानन्तर्य्यस्य चाभिधानक्रमेणैव प्राप्तावपि पदमिदमभिधानं स्पष्टार्थम्। मुक्तां नन्दकृतापमानसमय एव स्खलितबन्धनां ततः प्रभृत्येव बद्धाम्, शिखां मस्तकस्थं लम्बितकेशगुच्छम्, परामृशन् हस्तेन समामृशन्। चणकस्यापत्यमिति चाणक्यः, "यञ् गर्गादिः" इति यञ्प्रत्ययः।

(म) चाणक्य इति। कथयेत्यभिधानं स्वकर्त्तव्यप्रतिघातद्योतनार्थम्।

इतः प्रभृति प्रथमाङ्कसमाप्ति-पर्य्यन्तो मुखसन्धिः। तथा च "अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" इति सन्धेः सामान्यलक्षणम्। तथाहि अत्र राक्षसग्रहणरूप-प्रयोजनेनान्वितानां कथांशानां तन्मुद्रालाभरूपावान्तरप्रयोजनेन सम्बन्धः। मुख्यफल-राक्षसग्रहणाय चाणक्यस्योत्साहो बीजम्, "स्वल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति। फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥" इति लक्षणात्। राक्षसग्रहणरूपमुख्यफल-सिद्धये चाणक्यस्य औत्सुक्यरूपा आरम्भो नाम प्रथमा कार्य्यावस्था; "भवेदारम्भ औत्-सुक्यं यन्मुख्यफलसिद्धये" इति लक्षणात्। इत्यञ्च "यत्र बीजसमुत्पत्तिर्नानार्थरस-सम्भवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम्॥" इति मुखसन्धिलक्षण-सङ्गतिः। अस्य च उपक्षेपादीनि द्वादशाङ्गानि यथास्थानं निवेश्य तल्लक्षणानि वक्ष्यामः।

---

[ভ] তাহার পর খোলা টিকিতে হাত বুলাইতে বুলাইতে চাণক্য প্রবেশ করিলেন।

[ম] চাণক্য। বল, আমি থাকিতে কোন্ ব্যক্তি বলপূর্ব্বক চন্দ্রগুপ্তকে পরাজিত করিতে ইচ্ছা করিতেছে?

जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥८॥

---

**अन्वयः**—कः परिभूय आस्वादित-द्विरद-शोणित-शोण-शोभां सन्ध्यारुणां शशलाञ्छनस्य कलाम् इव स्फुरन्तीं जृम्भाविदारितमुखस्य हरेः मुखात् दंष्ट्रां हर्तुम् इच्छति ? ॥८॥

चन्द्रगुप्तस्याभिभवः खल्वशक्य एवेति दर्शयितुमाह आस्वादितेति। को जनः, परिभूय सिंहमेव पराजित्य, आस्वादितं परिपीतं यत् द्विरदशोणितं स्वनिहतहस्तिरुधिरं तेन शोणा रक्तवर्णा शोभा यस्यास्ताम्, अतएव सन्ध्यया सन्ध्यारागेण अरुणां रक्तवर्णाम्, शशलाञ्छनस्य चन्द्रस्य, कलामिव, स्फुरन्तीं दीप्यमानाम्, जृम्भया गात्रप्रसारणेन विदारितं व्यादत्तं मुखं वदनं येन तस्य, हरेः सिंहस्य, मुखान्मुखाभ्यन्तरात्, दंष्ट्रां दन्तपङ्क्तिम्, हर्तुम् आकृष्य नेतुम्, इच्छति; तदपि कथयेत्यर्थः। हस्तिविजयिनः सिंहस्य मुखाभ्यन्तरगतदंष्ट्राहरणं यथा नितान्तमसम्भवम्, प्रत्युत जिहीर्षोर्विनाशहेतुरेव; तथा नन्दविजयिनश्चाणक्यस्य क्रोड़गतायाश्चन्द्रगुप्तलक्ष्म्याः हरणमपि नितान्तमसम्भवम्, प्रत्युत जिहीर्षोर्विनाशहेतुरेवेति भावः।

अतएवात्र अप्रस्तुतात् समात् प्रस्तुतसमप्रतीतिरूपा अप्रस्तुतप्रशंसालङ्कारः श्रौतीपमा चानयोरङ्गाङ्गिभावेन सङ्करः; तथा प्रथमे पादे छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करश्च, अनयोर्मिथो निरपेक्षतया संसृष्टिः। वीरो रसः, ओजो गुणः, गौड़ी च रीतिः। तथा इतिवृत्तलक्षणकाव्यार्थसमुत्पत्तिरूपक्षेपो नाम प्रथमं मुखसन्ध्यङ्गम् "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इति लक्षणात्।

वसन्ततिलका वृत्तम् "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥८॥

---

হস্তীর রুধির পান করায় যাহার শোভা রক্তবর্ণ হইয়াছে; অতএব সন্ধ্যারাগে রঞ্জিত চন্দ্রকলার ন্যায় যাহা শোভা পাইতেছে; হাই তুলিবার সময়ে প্রসারিতমুখ সিংহের মুখ হইতে সেই দন্তপঙ্ক্তিকে কোন্ ব্যক্তি, সিংহকে পরাজয় করিয়া হরণ করিবার ইচ্ছা করিতেছে ? ॥৮॥

अपि च ।

नन्दकुलकालभुजगीं कोपानलबहललोलधूमलताम् ।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ॥९॥

अपि च । उल्लङ्घयन्मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।

---

अन्वयः—बध्यः कः नन्दकुल काल-भुजगीं कोपानल-बहल लोल धूमलतां मे शिखाम् अद्य अपि बध्यमानां न इच्छति ? ॥९॥

नन्देति । बध्यो मद्विरुद्धाचरणात् बधयोग्यः, को जनः, नन्दकुलस्य कालभुजगीं कृष्णसर्पीस्वरूपाम्, तस्य विनाशहेतुत्वादिति भावः, तथा मम कोप एवानलस्तस्य बहलां प्रचुरां लम्बितां च लोलां वायुना चञ्चलां च या धूमलता तां तत्स्वरूपामित्यर्थः, धर्म-सम्बात् लम्बितत्वसाम्याच्चेति भावः, मे मम, शिखाम्, अद्य इदानीमपि, बध्यमानां बन्धनविषयीभूतां तादृशशिखाया बन्धनमित्यर्थः न इच्छति ? मम शिखाया मुक्तावस्थैव विपक्षनाशहेतुरिति तद्बन्धनं सर्वैरेष्टव्यमेवेत्याशयः ।

अत्र शिखायां कालभुजगीत्वमात्रारोपात् प्रथमं निरङ्गं केवलरूपकम्, कोपे अन-लत्वारोपः शिखायां धूमलतात्वारोपे निमित्तमिति द्वितीयमश्लिष्टशब्दनिबन्धनं परम्प-रितरूपकम्, पूर्वार्द्धे वृत्त्यनुप्रासः, द्वितीयार्द्धे च्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्ष-तया संसृष्टिः । तथा प्रधानस्य बन्धनस्य बध्यमानामिति धात्वन्तर्निवेशेनाप्रधानीकृत-त्वात् विधेयाविमर्शदोषः ; स च 'अद्यापि शिखाया मे बन्धनं नेच्छति को बध्यः' इति पाठेन समाधेयः । वीरो रसः, प्रसादो गुणः, पाञ्चाली च रीतिः ।

आर्य्या जातिः ॥९॥

---

আর, হত্যার যোগ্য কোন্ ব্যক্তি, নন্দবংশের কালসর্পীস্বরূপা, এবং ক্রোধানলের প্রচুর ও চঞ্চল ধূমশ্রেণীরূপা আমার শিখাটার বন্ধন ইচ্ছা করে না ? ॥৯॥

---

(९)·· बहुलनीलधूमलताम् ।

सद्यः परात्मपरिमाणविवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ॥१०॥

शार्ङ्गरव ! शार्ङ्गरव ! (य)

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापय ।

---

अन्वयः = परात्म-परिमाण-विवेकमूढः कः नन्द-कुल काननधूमकेतोः समुज्ज्वलतः मम कोपस्य प्रतापम् उल्लङ्घयन् (सन्) शालभेन विधिना सद्यः विनाशं लभताम् ? ॥१०॥

उल्लङ्घयन्निति । परस्य आत्मनश्च यत् परिमाणम् उत्कर्षापकर्षावस्था तस्य विवेके विवेचनविषये मूढः मूर्खतया असमर्थः, को जनः, नन्दकुलमेव काननं विस्तृतत्वात् वनं तस्य धूमकेतोः अग्निस्वरूपस्य साकल्येन नाशकत्वादिति भावः, अतएव समुज्ज्वलतो ज्वालां विस्तारयतः, मम कोपस्य मदीयक्रोधस्य, प्रतापं तीव्रतां ज्वालाञ्च, उल्लङ्घयन् अतिक्रामन् सन्, शलभस्य पतङ्गस्यायमिति शालभस्तेन शलभविधिसदृशेनेत्यर्थः, विधिना प्रकारेण, सद्यस्तत्क्षणादेव, विनाशं लभतां प्राप्नोतु । मत्कोपपरीक्षा नन्दवंश एव जाता, अतस्तत्र पतितो विनश्येदेवेति भावः ।

अत्र नन्दकुले काननत्वारोपः कोपे धूमकेतुत्वारोपे निमित्तमित्यश्लिष्टशब्दनिबन्धनं परम्परितरूपकमलङ्कारः, शालभेनेति सादृश्याक्षेपान्निदर्शनाभेदः, चतुर्थपादे छेकानुप्रासश्चेति मिथो निरपेक्षतया संसृष्टिः ।

वसन्ततिलका वृत्तम् ॥१०॥

(य) शार्ङ्गेति । शार्ङ्गः शृङ्गनिर्म्मितो वंशीविशेषस्तस्य रव इव रवः कण्ठस्वरो यस्य स शार्ङ्गरवः तदाख्यः कश्चन छात्रः ; तत्सम्बोधनम्, सम्भ्रमे च द्विरुक्तिः ।

---

আর, পরের ও নিজের তারতম্য করিতে অসমর্থ কোন্ ব্যক্তি, নন্দবংশরূপ বনের অগ্নিস্বরূপ জাজ্বল্যমান মদীয় ক্রোধের প্রতাপকে অতিক্রম করতঃ, পতঙ্গের নিয়মে সত্বই ধ্বংস পাইতে ইচ্ছা করে ? ॥১০॥

चाणक्यः । वत्स ! उपवेष्टुमिच्छामि (र) ।

शिष्यः । उपाध्याय ! नन्वियं सन्निहितवेत्रासनैव द्वार-प्रकोष्ठशाला । तदस्यामुपवेष्टुमर्हत्युपाध्यायः (ल) ।

चाणक्यः । वत्स ! कार्य्याभियोग एवास्मान् आकुलयति (१) न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता (व) । नाट्येनोपविश्य आत्मगतम् । कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकल-नन्दराज्यपरिपणनप्रोत्साहितेन पर्वतपुत्रेण मलयकेतुना सह

---

(र) चाणक्य इति । आसनमानयेति भावः ।

(ल) शिष्य इति । सम्बोधने ननुशब्दः । सन्निहितं पूर्वमेव केनापि स्थापितं, वेत्रासनं यस्यां सा । एतेनानवरताज्ञापालनात् विरक्तिर्व्यज्यते ।

(व] चाणक्य इति । कार्य्येषु अवश्यकर्त्तव्यविषयेषु अभियोगः अभिनिवेशो दृढतरमनोयोग एव, अस्मान् मामित्यर्थः, आकुलयति व्यतिव्यस्तीकरोति । अतएव सर्वं वै यथायथविवेचनासामर्थ्येन युष्मासु अनवरतमादेशः क्रियत इति भावः । उपाध्यायानां सह भवतीति सहभूः स्वाभाविकी, शिष्यजने छात्रजनं प्रति, दुःशीलता शिष्य-जनस्य सुखभावेनावस्थानं प्रति असहिष्णुतारूपं कुस्वभावत्वम् । तेन च अनवरता-देशकरणेनापि त्वया न विरक्तिः कर्त्तव्येत्याशयः ।

---

[য] শার্ঙ্গরব ! শার্ঙ্গরব !

শিষ্য । [প্রবেশ করিয়া] অধ্যাপকমহাশয় ! আদেশ করুন ।

[র] চাণক্য । বৎস ! উপবেশন করিতে ইচ্ছা করি ।

[ল] শিষ্য । অধ্যাপকমহাশয় ! এই ওটাচালায় বেতের মোড়া পাতাই আছে ; সুতরাং উহাতেই আপনি ব'সিতে পারেন ।

---

(१)···व्याकुलयति··· ।

সন্ধায় তদুপগৃহীতেন চ মহতা ম্লেচ্ছরাজবলেন [১] পরিবৃতো বৃষলমভিযোক্তুমুদ্যত ইতি (শ)। বিচিন্ত্য। অথবা যেন ময়া সর্বলোকপ্রকাশং নন্দবংশবধং প্রতিজ্ঞায় নিস্তীর্ণা দুস্তরা প্রতিজ্ঞাসরিৎ, সোঽহমিদানীং প্রকাশীভবন্তমপ্যেনমর্থং ন

---

(শ) নাক্যেনেতি। প্রকাশতাং শ্রবণগোচরতাম্। অর্থো বিষয়ঃ। নন্দকুলস্য বিনাশেন জনিতো রোষো যস্য সঃ। পিতৃবধেন অমর্ষিতঃ ক্রোধিতস্তেন, সকলং যন্নন্দরাজ্যং তস্য পরিপণনেন প্রদানপ্রস্তাবেন প্রোৎসাহিতঃ প্রকৃষ্টমুৎসাহং প্রাপিতস্তেন। সন্ধায় সন্ধিং কৃত্বা। তেন মলয়কেতুনা উপগৃহীতং সংগৃহীতং তেন। বৃষলং নাপিতস্ত্রীগর্ভজাতত্বাৎ শূদ্রং চন্দ্রগুপ্তম্, অভিযোক্তুমাক্রমিতুম্।

[ষ] বিচিন্ত্যেতি। তস্য বিষয়স্য প্রকাশে তদ্বিশ্বাসে চ পৌরাণাং প্রাচীনমন্ত্রিরাক্ষসপক্ষপাতসম্ভাবনয়া চিন্তেতি ভাবঃ। সর্বেষাং লোকানাং প্রকাশং প্রত্যক্ষং যথা তথা। অর্থং বিষয়ম্। প্রশময়িতুং নিবারয়িতুম্, অপি তু সমর্থ এবেত্যর্থঃ।

---

[ব-শ-ষ-স] চাণক্য। বৎস! অসংখ্য কর্ত্তব্যবিষয়ে গুরুতর মনোযোগই আমাকে ব্যতিব্যস্ত করিয়া তুলিয়াছে; কিন্তু ছাত্রজনের প্রতি অধ্যাপকদিগের স্বাভাবিক কুস্বভাব নহে। (অভিনয়ের ধরণে উপবেশন করিয়া স্বগত) পুরবাসিবর্গের মধ্যে এ বিষয়টা প্রকাশ পাইয়াছে যে, নন্দবংশ ধ্বংস করায় রাক্ষসের ক্রোধ জন্মিয়াছে এবং পিতৃবধ করায় মলয়কেতু ও ক্রুদ্ধ হইয়াছেন; সুতরাং রাক্ষস সমস্ত নন্দরাজ্য দানের পণদ্বারা উৎসাহিত করিয়া, পর্বতকের পুত্র মলয়কেতুর সহিত সন্ধি করিয়া তাহার সংগৃহীত বিশাল ম্লেচ্ছসৈন্য পরিবেষ্টিত হইয়া, চন্দ্রগুপ্তকে আক্রমণ করিতে উদ্যত হইয়াছেন। (চিন্তা করিয়া) অথবা যে আমি সমস্ত লোকের প্রত্যক্ষে নন্দবংশবধের প্রতিজ্ঞা করিয়া, সেই দুস্তর প্রতিজ্ঞানদী হইতে উত্তীর্ণ হইয়াছি, সেই আমি কি এখন প্রকাশমান এই বিষয়-

---

[১]…ম্লেচ্ছরাজেন…।

समर्थः किं प्रशमयितुम् ? [ष] । कुत एतत् । यस्य मम—[स]

श्यामीकृत्याननेन्दून् रिपुयुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य्य ।
दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदाज्ज्वलन इव वने शाम्यति क्रोधवह्निः ॥११॥

---

[स) कुत इति । एतत् प्रशमनसामर्थ्यम् । यस्य मम क्रोधवह्निरिति श्लोकस्थेनान्वयः ।

अन्वयः—क्रोधवह्निः सन्ततैः शोकधूमैः रिपु-युवतिदिशाम् आननेन्दून् श्यामीकृत्य, मन्त्रिद्रुमेभ्यः नयपवनहृतं कामं मोहभस्म प्रकीर्य्य, सम्भ्रान्त-पौर-द्विज गण रहितान् नन्दवंशप्ररोहान् दग्ध्वा, वने ज्वलन इव, दाह्याभावात् शाम्यति, [किन्तु) खेदात् न ॥११॥

श्यामीकृत्येति । यस्य मम, क्रोध एव वह्निः क्रोधवह्निः, दाहकत्वसाम्यादिति भावः, सन्ततैरविच्छिन्नैः, शोका एव धूमास्तैः, श्यामीकरणसादृश्यादित्याशयः ; रिपुयुवतयः शत्रुस्त्रिय एव दिशस्तासाम, नैराश्येन शून्यत्वसाम्यादित्यभिप्रायः ; आननानि मुखान्येव इन्दवश्चन्द्रास्तान्, आह्लादकत्वादिसाधर्म्यादिति तात्पर्य्यम् ; श्यामीकृत्य मलिनान् विधाय ; तथा मन्त्रिण एव द्रुमा अत्युन्नतत्वसादृश्यात् द्रुमास्तेभ्यः तेष्वित्यर्थः, नयो मदीया नीतिरेव पवनः परिचालकत्वात् वायुस्तेन हृतं प्रेरितम्, कामं पर्य्याप्तम्, मोहः कर्त्तव्यज्ञानराहित्यमेव भस्म तत्, तत्त्वनिर्णयानर्हत्वसम्पादकत्वादिति भावः, प्रकीर्य्य विक्षिप्य ; सम्भ्रान्ता भयादुत्त्रासिव्यस्ताः पौराः पुरवासिन एव द्विजाः पलायनसाम्यात् पक्षिणस्तेषां गणेन रहितान् त्यक्तान् ; नन्दस्य वंशः कुलमेव वंशा वेणवस्तेषां प्ररोहान् अङ्कुरान्, दग्ध्वा भस्मीकृत्य, वने, ज्वलनो दावानल इव, दाह्यस्य दग्धव्यवस्तुनः अभावात्, शाम्यति निवर्त्तते ; किन्तु खेदात् श्रमवसन्नत्वात्, न शाम्यतीत्यन्वयः । दुर्बोधनीतिप्रयोजको मे पर्य्यायं क्रोध इति समुदायाशयः ।

---

টাকে নিবর্ত্তিত করিতে সমর্থ হইব না ? এ শক্তি আমার কোথা হইতে হইল ? যে আমার—

অপি চ।

শোচন্তোঽবনতৈর্নরাধিপভয়াদ্ধিক্‌শব্দগর্ভৈর্মুখৈঃ
মামগ্র্যাসনতোঽবকৃষ্টমবশং যে দৃষ্টবন্তঃ পুরা।
তে পশ্যন্তি তথৈব সম্প্রতি জনা নন্দং ময়া সান্বয়ং
সিংহেনেব গজেন্দ্রমদ্রিশিখরাৎ সিংহাসনাৎ পাতিতম্ ॥১২॥

---

অত্র সমস্তবস্তুবিষয়ং শ্লিষ্টং সাঙ্গং রূপকমলঙ্কারঃ, শ্রৌতোপমা, ন খেদাদিতি শব্দেনান্যব্যপোহনাৎ অপ্রশ্নপূর্ব্বিকা শাব্দী পরিসংখ্যা চ, ইত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ। বীরো রসঃ, প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ। স্রগ্ধরা বৃত্তম্ ॥১১॥

**অন্বয়ঃ**—যে পুরা নরাধিপভয়াৎ ধিক্‌শব্দগর্ভৈঃ অবনতৈঃ মুখৈঃ শোচন্তঃ [সন্তঃ] অগ্র্যাসনতঃ অবকৃষ্টম্ অবশং মাং দৃষ্টবন্তঃ, তে জনাঃ সম্প্রতি সিংহেন অদ্রিশিখরাৎ গজেন্দ্রম্ ইব ময়া সিংহাসনাৎ পাতিতং সান্বয়ং নন্দং তথা এব পশ্যন্তি ॥১২॥

শোচন্ত ইতি। যে জনাঃ, পুরা পূর্ব্বম্, নরাধিপভয়াৎ নন্দভয়াদেব। অয়ঞ্চ ধিক্‌শব্দগর্ভত্বং প্রতি হেতুঃ। বহির্ধিক্‌শব্দোচ্চারণে রাজা নন্দো দণ্ডয়িষ্যতীতি ভাবঃ। 'ধিক্‌শব্দঃ ধিগিমমকার্য্যকারিণং রাজানম্' ইত্যেবং নিন্দাবচনং গর্ভে অভ্যন্তরে যেষাং তৈঃ, অতএব চাবনতৈর্ম্মুখৈর্বিশিষ্টাঃ, শোচন্তঃ শোকং কুর্ব্বন্তঃ সন্তঃ, অগ্র্যাসনতঃ আত্মীয়শ্রেষ্ঠব্রাহ্মণাসনাৎ, অবকৃষ্টং নন্দেনৈব আকৃষ্য পাতিতম্, অবশং পরাধীনম্ অসহায়তয়া পরাধীনত্বাৎ প্রতিকর্ত্তুমসমর্থমিত্যর্থঃ, মাম্, দৃষ্টবন্তঃ; তে জনাঃ, সম্প্রতি, সিংহেন, অদ্রিশিখরাৎ পর্ব্বতশৃঙ্গাৎ, গজেন্দ্রমিব, ময়া, সিংহাসনাৎ পাতিতং বিনাশ-

---

ক্রোধরূপ অগ্নি, অবিচ্ছিন্ন শোকরূপ ধূম দ্বারা শত্রুস্ত্রীরূপ দিক্‌সমূহের মুখরূপ চন্দ্রগুলিকে মলিন করিয়া, মন্ত্রিরূপ বৃক্ষগুলির উপরে নীতি-রূপ-বায়ুপ্রেরিত প্রচুর মোহরূপ ভস্ম নিক্ষেপ করিয়া, এবং ব্যতিব্যস্ত পুরবাসিরূপ-পক্ষিগণ-পরিত্যক্ত নন্দবংশরূপ বাঁশঝাড়ের অঙ্কুরগুলিকে দগ্ধ করিয়া, বনে দাবানলের ন্যায় দাহ্যপদার্থের অভাবে নিবৃত্তি পাইতেছে; কিন্তু পরিশ্রমে অবসন্ন হওয়ার জন্য নহে ॥১১॥

---

(১২) তে পশ্যন্তু···।

सोऽहमिदानीमवसितप्रतिज्ञाभारोऽपि वृषलापेक्षया शस्त्रं धारयामि (छ)। येन मया—(ज)

समुत्खाता नन्दा नव हृदयरोगा इव भुवः,
कृता मौर्य्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥१३॥

---

तेन भ्रंशितम्, सान्वयं सवंशं नन्दम्, तथैव पश्यन्ति। तादृशापमानात् परमेव मया पर्य्याप्त एव तत्प्रतीकारः कृत इति भावः।

अत्र श्रौतोपमालङ्कारः। रसादयः पूर्ववत्। शार्दूलविक्रीडितं वृत्तम् "सूर्य्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥१२॥

[छ] स इति। अवसितप्रतिज्ञाभारोऽपि समाप्तगुरुप्रतिज्ञोऽपि, वृषलस्य चन्द्रगुप्तस्य अपेक्षया उद्देशेन, शस्त्रं मन्त्रिधार्य्यमस्त्रम्। चन्द्रगुप्तस्य दृढप्रतिष्ठापर्य्यन्त एव ममायमुद्यम इति भावः। अतएवात्र इतिवृत्तलक्षणकाव्यार्थस्य पूर्वापेक्षया आधिक्योत्पन्नत्वात् परिकरो नाम मुखसन्धेरङ्गम्, "समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" इति लक्षणात्।

[ज] येनेति। इदन्तु श्लोकस्थक्रियाणां कर्त्तृपदम्।

अन्वयः—भुवः हृदयरोगाः इव नव नन्दाः समुत्खाताः, सरसि नलिनी इव

আর, যে সকল লোক রাজার ভয়ে ধিক্ শব্দকে মুখের ভিতরে রাখিয়া, অবনতমুখে থাকিয়া, শোক করতঃ, আমাকে শ্রেষ্ঠ আসন হইতে পাতিত ও অবশ অবস্থায় পূর্ব্বে দেখিয়াছিল; এখন সেই সকল লোক দেখিতেছে যে, সিংহ যেমন পর্ব্বতশৃঙ্গ হইতে হস্তিশ্রেষ্ঠকে নিপাতিত করে, আমিও তেমনই নন্দকে সিংহাসন হইতে সবংশে নিপাতিত করিয়াছি ॥১২॥

(ছ) সেই আমি এখন গুরুতর প্রতিজ্ঞা সম্পাদন করিয়াও, চন্দ্রগুপ্তের জন্যই অস্ত্র ধারণ করিতেছি।

मौर्य्ये लक्ष्मीः स्थिरपदा कृता, अभियुक्तेन मनसा द्वयोः कोपप्रीत्योः तुल्यं द्वितयं सारं फलं द्विषति च सुहृदि च विभक्तम् ॥१२॥

समुन्मूलिता इति । येन मया, भुवः पृथिव्याः, हृदयरोगा हृदयाभ्यन्तरवर्त्तिव्रणा इव, अत्याचारित्व तथैव वेदनाजनकत्वादिति भावः, नव नवसंख्यकाः अष्टौ पुत्राः स्वयञ्चेत्यर्थः, नन्दाः योगानन्दादयः, समुन्मूलिताः चिकित्सया अभिचारेण च विनाशिताः । सरसि जलाशये, नलिनी पद्मिनी इव, मौर्य्ये चन्द्रगुप्ते, लक्ष्मीः राजश्रीः, स्थिरं निश्चलं पदं स्थानं स्थितिर्यस्याः सा तादृशी कृता । अतएव अभियुक्तेन अभिनिविष्टेन मनसा, द्वयोः कोपप्रीत्योः क्रोधानुरागयोः, तुल्यं समानम्, द्वितयं द्विविधम्, सारमुत्कृष्टम्, निग्रहानुग्रहरूपं फलम्, द्विषति नन्दादौ शत्रुवर्गे च, सुहृदि मित्रे चन्द्रगुप्ते च, विभक्तं विभज्य दत्तम्, नन्दवंशध्वंसकरणात् निग्रहरूपं कोपफलं तत्रैव दत्तम्, तथा राज्यदानात् अनुग्रहरूपमनुरागफलं मित्रे चन्द्रगुप्ते च दत्तमित्यर्थः ।

अत्र प्रथमे पादे नन्दानां भुवो हृदयरोगत्वेन सम्भावनाकरणादिवशब्दोपादानाच्च वाच्या गुणोत्प्रेक्षा, द्वितीये श्रौतोपमा, द्वितीयार्द्धे कोपप्रीत्योर्द्विषति सुहृदि चेति यथासंख्येनान्वयाद्यथासंख्यम्, परार्द्धे प्रति पूर्वार्द्धगतवाक्यद्वयार्थस्य हेतुत्वात् काव्यलिङ्गञ्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । प्रसादो गुणः, वैदर्भी च रीतिः । तथा श्यामीकृत्याननेन्दूनित्यारभ्य एतदन्तसन्दर्भे गर्वो नाम नाट्यालङ्कारः, "गर्वोऽवलेपजं वाक्यम्" इति लक्षणात् ।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ।

शिखरिणी छन्दः "रसैरुद्रैश्छिन्ना य-म-न-स-भ-ला गः शिखरिणी" इति लक्षणात् ॥१२॥

---

যে আমি, পৃথিবীর হৃদয়ের ভিতরের ব্রণের ন্যায় নয়টা নন্দকেই সমূন্মূলিত করিয়াছি এবং সরোবরে পদ্মিনীর ন্যায় চন্দ্রগুপ্তে রাজলক্ষ্মীকে চিরস্থায়ী করিয়াছি। সুতরাং আমি নিবিষ্ট চিত্ত দ্বারা ক্রোধ ও অনুরাগ এই দুইটীর সমান দুইটী উৎকৃষ্ট [ নিগ্রহ ও অনুগ্রহরূপ ) ফলকে শত্রু ও মিত্রের উপরে বিভক্ত করিয়া দিয়াছি ॥১৩॥

অথবা অগৃহীতে রাক্ষসে কিমুৎখাতং নন্দবংশস্য, কিং বা স্থৈর্য্যমুৎপাদিতং চন্দ্রগুপ্তলক্ষ্ম্যাঃ (ক)। বিচিন্ত্য। অহো! রাক্ষসস্য নন্দবংশে নিরতিশয়ো ভক্তিগুণঃ; স খলু কস্মিং-শ্চিদপি জীবতি নন্দান্বয়াবয়বে বৃষলস্য সাচিব্যং গ্রাহয়িতুং ন শক্যতে (খ)। অতস্তদভিযোগং প্রতি নিরুদ্যোগৈরস্মাভিরব-স্থাতুমযুক্তমিত্যনয়ৈব বুদ্ধ্যা তপোবনগতোঽপি ঘাতিতস্তপস্বী নন্দবংশীয়ঃ সর্ব্বার্থসিদ্ধিঃ (গ)। যাবদসৌ মলয়কেতুমঙ্গী-কৃত্যাস্মদুচ্ছেদায় বিপুলতরং প্রযত্নমুপদর্শয়ত্যেব (ঘ)। প্রত্যক্ষবদাকাশে লক্ষ্যং বদ্ধা। সাধু অমাত্য! রাক্ষস! মন্ত্রিবৃহ-স্পতে! সাধু!! কুতঃ—(ঙ)

---

[ক] অথবেতি। অগৃহীতে চন্দ্রগুপ্তপক্ষমপ্রাপিতে। কিমপি নেত্যর্থঃ, রাক্ষসঃ কিল বুদ্ধিবলেন পুনরন্যং নন্দবংশীয়ং রাজানং কুর্য্যাৎ চন্দ্রগুপ্তঞ্চাপসারয়েদতো রাক্ষস-গ্রহণায়ানন্যমেব যত্নঃ কর্ত্তব্য ইতি ভাবঃ।

অতএবাত্র পরিন্যাসো নাম মুখসন্ধ্যঙ্গম্, "তন্নিষ্পত্তিঃ পরিন্যাসঃ" ইতি লক্ষণাৎ।

(খ) অহো ইতি। ন বিদ্যতে অতিশয়ো যস্মাৎ স নিরতিশয়ঃ। ভক্তিগুণঃ অনুরাগোৎকর্ষঃ। নন্দস্য অন্বয়ো বংশস্তস্য অবয়বে অংশে জনে ইত্যর্থঃ, বৃষলস্য চন্দ্র-গুপ্তস্য, সাচিব্যং মন্ত্রিত্বম্।

[গ] অত ইতি। তস্য নন্দান্বয়াবয়বমাত্রস্য অভিযোগং নিপাতায়াক্রমণম্। তপস্বী অকালে হতত্বাৎ শোচ্যঃ। সর্ব্বার্থসিদ্ধির্নাম।

(ঘ) যাবদিতি। অবধারণে যাবচ্ছব্দঃ। অসৌ রাক্ষসঃ, অঙ্গীকৃত্য প্রাগুক্ত-রূপেণ সন্ধিনা প্রভুত্বেন স্বীকৃত্য।

(ঙ) প্রত্যক্ষবদিতি। আকাশে শূন্যে। সাধুত্বমেব দর্শয়িতুমাহ কুত ইতি।

---

[ক-ঙ) অথবা, রাক্ষসকে হস্তগত করিতে না পারিলে, নন্দবংশের কি উৎখাত করিলাম? চন্দ্রগুপ্তের রাজলক্ষ্মীরই বা কি স্থায়িত্ব সম্পা-দন করিলাম? (চিন্তা করিয়া) কি আশ্চর্য্য! নন্দবংশের উপরে

ऐश्वर्य्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।
भर्त्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ॥१४॥

---

**अन्वयः**—अयं लोकः अर्थतः ऐश्वर्य्यात् अनपेतम् ईश्वरं सेवते ; ये विपत्तिषु तम् अनुगच्छन्ति, ते पुनः तत्प्रतिष्ठाशया। ये भर्त्तुः प्रलये अपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्य्यधुरां वहन्ति, त्वादृशाः ते कृतिनः दुर्लभाः ॥१४॥

ऐश्वर्य्यादिति। अयं लोकः प्रायेण सर्वो जनः, अर्थतः अर्थाय स्वार्थसिद्धये इत्यर्थः, ऐश्वर्य्यात् सम्पत्तेः, अनपेतम् अच्युतं सम्पत्तिमन्तमिति तात्पर्य्यम्, ईश्वरं प्रभुम्, सेवते आराधयति। ये जनाः, विपत्तिषु सम्पत्तिनाशरूपासु विपत्सु मध्ये, तम् ईश्वरम्, अनुगच्छन्ति अनुगमनेन सेवन्ते ; ते जनाः, पुनरपि, तस्य ईश्वरस्य प्रतिष्ठा सम्पत्तिलाभेनाधिपत्ये स्थितिः तस्या आशया तथात्वेनैव स्वार्थसिद्ध्याशयेत्यर्थः। किन्तु ये जनाः, भर्त्तुः प्रभोः, प्रलये मरणे सत्यपि, पूर्वसुकृतस्य भर्त्तृकृतपूर्वोपकारस्य आसङ्गेन आसक्त्या तत्स्मरणेनेत्यर्थः, निःसङ्गया निःस्वार्थया, भक्त्या अनुरागेण, कार्य्यधुरां भर्त्तुरेव कर्त्तव्यभारम्, वहन्ति सम्पादयितुं चेष्टन्ते ; त्वादृशा भवादृशाः ते कृतिनः कार्य्यकुशला जनाः, दुर्लभाः।

---

রাক্ষসের অসাধারণ অনুরাগ রহিয়াছে ; সুতরাং নন্দবংশের কোন লোক জীবিত থাকিতে রাক্ষসকে চন্দ্রগুপ্তের মন্ত্রিত্ব গ্রহণ করাইতে পারা যাইবে না। অতএব নন্দবংশীয় সমস্ত লোককেই ধ্বংস করিবার বিষয়ে আমাদের নিরুদযোগ হইয়া থাকা উচিত নহে, ইহা মনে করিয়াই, তপোবনে থাকিলেও, নন্দবংশীয় শোচনীয় সর্বার্থসিদ্ধিকে সেই খানেই হত্যা করাইয়াছি। তাহাতে আবার ঐ রাক্ষস মলয়কেতুকে প্রভু স্বীকার করিয়া আমাদের উচ্ছেদের জন্য অত্যন্ত চেষ্টা দেখাইতেছে। (প্রত্যক্ষের ন্যায় শূন্যে রাক্ষসকে লক্ষ্য করিয়া) সাধু, অমাত্যরাক্ষস! মন্ত্রিবৃহস্পতি! সাধু। কেন বলিতেছি?

मलयकेतुः। आर्य्य! तातेन धृतपूर्व्वाणां विशेषतश्चन्द्रगुप्तहस्तगतानां वणिग्विक्रय इति न युज्यते। अथवा युज्यत एवैतत्। कुतः—(ख)

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥१३॥

---

[क] राक्षस इति। सम्भ्रमे कथंशब्दः। आह ब्रवीति प्रतीहारीति शेषः। पूर्वं जात्यपेक्षया एकवचनं प्रयुक्तम्, अत्र तु व्यक्त्यपेक्षया बहुवचनमिति न विरोधः। व्यक्तं स्पष्टं ध्रुवमित्यर्थः; अस्य पर्वतेश्वरस्य। न केवलं सिद्धार्थकादयश्चाणक्येन प्रयुक्ताः, एतानि भूषणान्यपि इत्यपेरर्थः। चाणक्यप्रयुक्तानीत्यनुमीयत इति भावः।
(ख) मलयकेतुरिति। वणिग्भिर्विक्रय इति वणिग्विक्रयः। न युज्यते न सम्भवति। तथा च चाणक्येनैव विषकन्याप्रयोगेण तातः पर्वतेश्वरो निहतः, इति तावद्भवता मतम्; तस्मात्तातभूषणानामलङ्काराणां चन्द्रगुप्तहस्तगमनस्यैव सर्वथा सम्भवः; चन्द्रगुप्तस्य राजा महाधनी; तेन च तस्य धनग्रहणार्थं महामूल्यतया महादरणीयानामलङ्काराणां वणिग्भ्यो विक्रयो वणिग्भिर्वान्यस्मै विक्रयो वा कुतोऽपि न सम्भवति। अतश्च 'वणिग्भ्यः क्रयोऽस्माभिः' इति यदुक्तं तदपि सर्वथैव मिथ्येति भावः। आक्रोशेन पक्षान्तरं वदन्नाह अथवेति। एतेन चन्द्रगुप्तेन तदलङ्कारविक्रयणम्।

---

রাক্ষস। (স্বগত) 'পূর্ব্বে পর্ব্বতেশ্বর ধারণ করিতেন' এই কথা যে প্রতীহারী বলিল! নিশ্চয়ই এগুলি পর্ব্বতেশ্বরেরই অলঙ্কার। (প্রকাশ্যে) এগুলিও চাণক্যপ্রেরিত বণিকেরাই আমার নিকট বিক্রয় করিয়া গিয়াছে।

মলয়কেতু। আর্য্য! পিতৃদেব এ অলঙ্কারগুলি পূর্ব্বে ধারণ করিতেন; বিশেষতঃ এগুলি চন্দ্রগুপ্তের হাতে গিয়াছিল। সুতরাং 'এগুলি বণিকেরা বিক্রয় করিয়াছে' ইহা সম্ভব হইতে পারে না। অথবা অবশ্যই সম্ভব হইতে পারে। কেন না,

राक्षसः । स्वगतम् । अहो ! सुश्लिष्टोऽभूदेष प्रयोगः । कुतः—(ग)

लेखोऽयं न ममेति नोत्तरमिदं मुद्रा मदीया यतः,
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम् ।
मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत्,
तस्मात् सम्प्रतिपत्तिरेव हि वरं, न ग्राम्यमत्रोत्तरम् ॥१८॥

---

अन्वयः—क्रूरेण भवता अधिकं लाभम् इच्छतः विक्रेतुः चन्द्रगुप्तस्य (सम्बन्धे) वयम् एतेषां मूल्यं कल्पिताः ॥१७॥

चन्द्रेति । क्रूरेण हिंस्रस्वभावेन, भवता राक्षसेन, अधिकं न्याय्यादतिरिक्तं लाभम्, इच्छतः, अतएव विक्रेतुः, चन्द्रगुप्तस्य सम्बन्धे वयम् अहमित्यर्थः, एतेषाम् अलङ्काराणाम्, मूल्यम्, कल्पिता निरूपिताः । तथा च चन्द्रगुप्त एतदलङ्कारदानेन मां ग्रहीतुमिच्छति ; त्वमपि एतदलङ्कारग्रहणेन मामेव तस्मै दातुं प्रवर्त्तसे ; स एव च चन्द्रगुप्तस्य न्याय्यमूल्यापेक्षया अधिको लाभ इति भावः ।

अतएवात्र पर्य्यायोक्तमलङ्कारः, "पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते" इति लक्षणात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

मूल्यमित्यस्य विधेयतया प्राधान्येऽपि वयमित्युद्देश्यस्य बहुत्वात् पुंस्त्वाच्च कल्पिता इत्यत्र बहुवचनं पुंस्त्वञ्च ; "उद्देश्यविधेययोरुद्देश्यसमानवचनत्वमाख्यातस्य" इति काशिकाप्रामाण्यात् । आख्यातस्येति साध्यमानक्रियाया इत्यर्थः ॥१७॥

[ग] राक्षस इति । एष प्रयोगः भेदसम्पादनव्यापारः, सुश्लिष्टः सुसंलग्नः, अभूत् । तत्र कारणमाह कुत इति ।

अन्वयः—अयं लेखः न मम इति इदम् उत्तरं न [सङ्गच्छते], यतः मदीया मुद्रा ; शकटेन सौहार्दं खण्डितम्, इति एतत् कथं श्रद्धेयम् । कः नाम नरपतौ

---

চন্দ্রগুপ্ত বিক্রেতা হইয়া অধিক লাভ ইচ্ছা করিয়াছে ; তাই হিংস্র-স্বভাব আপনি তাহার নিকট আমাকেই এই অলঙ্কারগুলির মূল্য কল্পনা করিয়াছেন ॥১৭॥

मलयकेतुः। एतदार्य्यं पृच्छामि (ष)।

मौर्य्ये भूषणविक्रयं सम्भावयेत्, तस्मात् सम्प्रतिपत्तिः एव हि वरम्, अत्र ग्राम्यम् उत्तरं न ॥१८॥

लेख इति। अयं लेखः पत्रम्, न मम, इत्येवम्, इदमुत्तरम्, न सङ्गच्छत इति शेषः। यतो हेतोः, मदीया मुद्रा पत्राङ्के ममाङ्कुरीमुद्राचिह्नमेव वर्त्तते। पत्रस्य अस्मदीयत्वे तदुपरि मन्मुद्राचिह्नं न यातुमर्हतीति भावः। अथ पूर्वसौहार्द्दनाशात् शकटदासेनैव मुद्राचिह्नं दत्तमिति चेत्तत्राह शकटेन शकटदासेन, सौहार्द्दं मम मित्रत्वम्, खण्डितं छिन्नम्, इत्येतदुत्तरम्, कथं श्रद्धेयं लोकैर्विश्वास्यम्? अपि तु कथमपि नेत्यर्थः; तत् खण्डनकारणादर्शनादित्याशयः। इतरं प्रयोगान्तरं दर्शयति मौर्य्ये इति। को नाम जनः, नरपतौ राजनि, मौर्य्ये चन्द्रगुप्ते, भूषणानां विक्रयम्, सम्भावयेत् सम्भवपरतया तर्कयेत्? अपि तु कोऽपि नेत्यर्थः, नरपतेर्भूषणविक्रयलब्ध-धनस्यानावश्यकत्वात् स्वभावत एव धनप्राचुर्य्यसत्त्वादित्यभिप्रायः। तस्माद्धेतोः, सम्प्रति-पत्तिरेव हि 'ममैवायं लेखः' इति स्वीकारोक्तिरेव, वरम् ईषत् प्रिया; किन्तु अत्र विषये, ग्राम्यम् 'अयं लेखो न मम' इत्यधमयोग्यम्, उत्तरं प्रतिवाक्यम्, न वरम्, तथात्वे दुर्बलतामात्रप्रकाशात् वस्तुतश्च विश्वासासम्भवादिति भावः।

अत्र सम्प्रतिपत्तेर्वरत्वं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, नेत्यादिना अत्यन्तापह्नवात् शाब्दी परिसंख्या चानयोरङ्गाङ्गिभावेन सङ्करः। "यः कौमारहरः स एव हि वरः" इत्यादिवदेव 'एव हि' शब्दद्वयेनैव अत्यन्तावधारणसूचनान्नाधिकपदता दोषः। प्रसादो गुणः, वैदर्भी रीतिः, शार्दूलविक्रीडितञ्च वृत्तम् ॥१८॥

রাক্ষস। (স্বগত) ভাল! শত্রুর এই ভেদপ্রয়োগটী সুসংলগ্নই হইয়াছে। কারণ,

'এ পত্র আমার নহে' এ উত্তর সঙ্গত হয় না; যেহেতু ইহার উপরে আমারই মুদ্রাচিহ্ন রহিয়াছে। 'শকটদাস সে সৌহার্দ্দ ভঙ্গ করিয়াছে' এ উত্তর বিশ্বাসযোগ্য হইবে কেন। 'রাজা চন্দ্রগুপ্ত অলঙ্কার বিক্রয় করিয়াছে' ইহা কোন্ ব্যক্তি ধারণা করিবে। অতএব স্বীকার করাই ভাল; কিন্তু অধমের যোগ্য উত্তর করা ভাল নহে ॥১৮॥

राक्षसः। सवाष्पम्। य आर्य्यस्तं पृच्छ। वयमिदानीमनार्य्याः संवृत्ताः (ङ)।

मलयकेतुः।—

मौर्य्योऽसौ स्वामिपुत्रः परिचरणपरो, मित्रपुत्रस्तवाहं,
दाता सोऽर्थस्य तुभ्यं, स्वमतमनुगतस्त्वन्तु मह्यं ददासि।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र ते, स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्य्यं करोति॥१९॥

[घ] मलयेति। आर्य्यं भवन्तम्, एतत् "इदमिदानीं किम्" इति वक्ष्यमाणमित्यर्थः। किन्तु तन्मध्य एव "य आर्य्यः" इत्यादि राक्षसो ब्रवीतीति बोध्यम्।

[ङ] राक्षस इति। इदानीम्—ईदृशघटनया तत्र मनोवृत्तेः परीक्ष्यकाले। तथा च "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृतः।" इत्यार्य्यलक्षणात् तव मते अस्माभिरिदानीं सर्वथैवाकर्त्तव्याया विश्वासघातकताया आचरणादस्मात् अनार्य्या एव वयं जाता इति भावः। सक्षोभोक्तिरियम्।

अन्वयः—असौ मौर्य्यः तव स्वामिपुत्रः परिचरणपरः [च], अहं मित्रपुत्रः; सः तुभ्यम् अर्थस्य दाता, त्वन्तु अनुगतः [सन्] मह्यं स्वमतं ददासि। तत्र ते दास्यम् [अपि] सत्कारपूर्वं सचिवपदं ननु, अत्र [तु] स्वाम्यम्। अधिकतरे कस्मिन् स्वार्थे समीहा पुनः त्वाम् अनार्य्यं करोति॥१९॥

मौर्य्य इति। असौ मौर्य्यश्चन्द्रगुप्तः, तव, स्वामिनः प्रभोर्नन्दस्य पुत्रः, तथात्वेऽपि च परिचरणपरः तवैव परिचर्य्यापरायणः; अतस्तस्मिन् तवानुरागातिशयः सम्भवत्येवेति भावः। किन्तु अहम्, तव मित्रस्य पर्वतेश्वरस्य पुत्र एव न पुनः स्वामिपुत्रम्; अतो मयि तवानास्था युज्यत एवेत्याशयः। स मौर्य्यः, तुभ्यं राक्षसाय, अर्थस्य धनस्य, दाता वेतनपारितोषिकादिभावेन अर्पयिता भविष्यति; त्वन्तु, अनुगतः सन् मम

मलयकेतु। আর্য্যকে (আপনাকে) এই বিষয় জিজ্ঞাসা করিতেছি।

রাক্ষস। (অশ্রুপাতের সহিত) যে আপনার আর্য্য, তাঁহাকে জিজ্ঞাসা করুন। আমি এখন অনার্য্য হইয়া পড়িয়াছি।

राक्षसः । कुमार ! एवमयुक्तव्याहारिणा भवतैव मे निर्णयो दत्तः । कुतः—'मौर्य्योऽसौ स्वामिपुत्रः' इति युष्मदस्मदीयश्लोकद्वयेन पठति (च) ।

सर्वथा स्वाधीनत्वात् मयि सर्वदैवानुगत्येन वर्त्तमानः सन्, मह्यम्, स्वमतं राजकार्य्यादिषु निजाभिप्रायम् ददासि ज्ञापयसि । तथा च तत्र भायः, अत्र तु व्यय इति पर्य्यालोचनयाऽपि तत्पक्षाश्रयस्तव श्रेयानित्यभिप्रायः । तथा तत्र चन्द्रगुप्तपक्षे, ते तव, दास्यं भृत्यत्वमपि, सत्कारपूर्वं स्वाधीनतासमर्पणात् सम्मानपूर्वकम्, सचिवपदं ननु मन्त्रित्वपदमेव ; अतो नाममात्रेण दासत्वं तुच्छमेवेति भावः । किन्तु अत्र मयि, स्वाम्यं स्वाधीनत्वात् प्रभुत्वम्, तेन च त्वयि नियोज्यत्वमित्यर्थः । अतोऽपि तव तत्पक्षावलम्बनमेव न्याय्यमित्याशयः । अतएव अधिकतरे कस्मिन् स्वार्थे स्वप्रयोजनीभूतविषये, समीहा त्वामचेष्टा कर्त्री, पुनः, त्वाम्, अनार्य्यम् असदाचरणात् आर्य्यविपरीतम्, करोति ? कस्मिन्नपि नेत्यर्थः । तथा च "मनः स्वार्थं समीहते" इति न्यायात् उक्तयुक्तिसमुदायेन च चन्द्रगुप्तपक्ष एव तव स्वार्थाधिक्यात् स्वार्थाधिक्ये प्रवृत्तेश्च प्रकृताचारसिद्धत्वात् तवेयं चन्द्रगुप्तपक्षावलम्बनचेष्टा कथमपि न त्वामनार्य्यं करोतीति भावः । लोलुपहृतनीतिविषम् । ईदृशव्याख्याने परवर्त्ती युष्मदस्मदीयश्लोकद्वयेन राक्षसपाठः सर्वथा सङ्गच्छते ; प्राचां व्याख्याने तु तथा नेति सुधीभिर्विवेचनीयम् ।

अत्र चतुर्थपादवाक्यार्थं प्रति पूर्वपादत्रयवाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । प्रसादो गुणः, वैदर्भी रीतिः, स्रग्धरा च वृत्तम् ॥१९॥

[च] राक्षस इति । एवम् इत्थं "चन्द्रगुप्तस्य विक्रेतुः—" इत्यादिरूपेणेत्यर्थः अयुक्तम् असम्भावनीयत्वात् असम्भवत्वाच्च असङ्गतं व्याहरति वदतीति सः, तेन तथाविधे-

মলয়কেতু। ঐ চন্দ্রগুপ্ত আপনার প্রভুর পুত্র এবং পরিচর্য্যাপরায়ণ ; আর আমি আপনার মাত্র মিত্রের পুত্র। চন্দ্রগুপ্ত আপনাকে ধন দিবে ; আর আপনি অনুগত থাকিয়া আমাকে নিজের মত দিবেন। এবং সেখানে আপনার দাসত্ব হইলেও সম্মানপূর্ব্বক মন্ত্রিপদই বটে ; আর এখানে আমারই প্রভুত্ব, আপনার পরাধীনত্ব। সুতরাং অধিকতর কোন ... আপনাকে অনার্য্য করিতেছে ? ॥১৯॥

নাপি সতা, ভবতৈব ত্বয়ৈব, মে মম, নিশ্চয়ো দত্তঃ কস্য পক্ষস্যাশ্রয়ঃ শ্রেয়ানিতি বিষয়ে নিশ্চয়ঃ প্রতিপাদিতঃ। কস্মাদ্বাক্যাৎ প্রতিপাদিত ইত্যাহ কুত ইতি। ইতি ইত্যাদিকং পূর্বোক্তশ্লোকম্‌, অন্বয়েন পরস্পরপরিবর্তনেন যুষ্মৎপদস্থানে অস্মৎপদস্য অস্মৎপদস্থানে চ যুষ্মৎপদস্য প্রয়োগেণেত্যর্থঃ। স পাঠস্তু—

মৌর্য্যোঽসৌ স্বামিপুত্রঃ, পরিচরণপরো মিত্রপুত্রো মম ত্বম্‌,
দাতা সোঽর্থস্য মহ্যম্‌, স্বমতমনুগতোঽহন্তু তুভ্যং দদামি।
দাস্যং সৎকারপূর্বং ননু সচিবপদং তত্র মে স্বাম্যমত্র,
স্বার্থে কস্মিন্‌ সমীহা পুনরধিকতরে মামনার্য্যং করোতি॥

ইত্থম্ভূতপাঠে চ রাক্ষসাভিপ্রেতোঽয়মর্থঃ—অসৌ মৌর্য্যঃ মম স্বামিপুত্রঃ, ত্বন্তু মম মিত্রপুত্রঃ পরিচরণপরঃ পরিচর্য্যাপরায়ণশ্চ। এবঞ্চ স্বামিপুত্রত্বেন মিত্রপুত্রত্বেন চ যুবয়োরুভয়োর্বিশেষাভাবেঽপি ত্বং পরিচর্য্যাপরায়ণ ইতি ত্বৎপক্ষাবলম্বনমেব মে সঙ্গচ্ছত ইতি ভাবঃ। স মৌর্য্যঃ, মহ্যম্‌, অর্থস্য বেতনধনস্য, দাতা; অহন্তু, অনুগতঃ তব সর্বকার্য্যেষ্বেব অনুসৃতঃ সম্বদ্ধঃ সন্নিত্যর্থঃ, তুভ্যম্‌, স্বমতং সর্বকার্য্যেষ্বেব আত্মাভিপ্রায়ং দদামি। তথা চ চন্দ্রগুপ্তপক্ষে বেতনগ্রহণাদহং তস্য মতানুবর্ত্তী, তব পক্ষে তু তদগ্রহণাৎ ত্বমেব মম মতানুবর্ত্তীতি কার্য্যসৌকর্য্যাৎ ত্বৎপক্ষাশ্রয় এব মে শ্রেয়ানিত্যাশয়ঃ। অতএব চ তত্র চন্দ্রগুপ্তপক্ষে, সৎকারপূর্বম্‌ আদরপূর্বকং সচিবপদমপি, দাস্যং ননু বেতনগ্রহণাৎ দাসত্বমেব; অত্র তব পক্ষে তু, স্বাম্যং বেতনাগ্রহণাৎ প্রভুত্বম্‌। তেনাপি আবস্থায়া মহাপার্থক্যাৎ ত্বৎপক্ষস্থিতিরেব মে সর্বথা ন্যায্যেত্যভিপ্রায়ঃ। তস্মাৎ কস্মিন্‌ অধিকতরে স্বার্থে, সমীহা চেষ্টা, মামনার্য্যং করোতি, অপি তু কুত্রাপি নেত্যর্থঃ। তেনাত্র পূর্বার্থাৎ সম্পূর্ণবিপরীত এবার্থ ইতি দ্রষ্টব্যম্‌।

অতএবাত্র মলয়কেতূক্তেরন্যথা যোজনাৎ অর্থশ্লেষাচ্চ শ্লেষবক্রোক্তিরলঙ্কারঃ পূর্ববৎ কাব্যলিঙ্গঞ্চেতি সঙ্করঃ। উদাহরণং নাম নাট্যলক্ষণম্‌ "যত্র তুল্যার্থযুক্তেন বাক্যেনাভিপ্রদর্শনাৎ। সাধ্যতেঽভিমতশ্চার্থস্তদুদাহরণং মতম্‌" ইতি লক্ষণাৎ।

---

রাক্ষস। কুমার! এই ভাবে অসঙ্গত বলিয়াও আপনিই আমার নিশ্চয় করিয়া দিয়াছেন। কেন না,—(এই বলিয়া "মৌর্য্যোঽসৌ স্বামি-

मलयकेतुः । लेखमलङ्कारस्थगिकाञ्च निर्दिश्य । इदमिदानीं किम् ? [छ] ।

राक्षसः । सबाष्पम् । विधेर्विलसितमिदम्, न चाणक्यस्य । कुतः—[ज]

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां
पुत्रेभ्यः कृतवेदिनां कृतधियां येषामभिन्ना वयम् ।
ते लोकस्य परीक्षकाः क्षितिभृतः पापेन येन क्षताः
तस्येदं विपुलं विधेर्विलसितं पुंसां प्रयत्नच्छिदः ॥२०॥

---

[छ] मलयेति । सर्वविषय एवास्वीकारः क्रियते, अथ च 'इदमिदानीं किम्' त्वया एतत् सर्वं प्रेषितं कथमित्यर्थः ।

[ज] राक्षस इति । विलसितं खेलितं व्यापार इति यावत् । न पुनश्चाणक्यस्य विलसितमित्यन्वयः । विपरीतलक्षणया चाणक्यस्यैव सर्वमिदं विलसितमिति द्योतितम् ।

**अन्वयः**—परिभावधामनि भृत्यत्वे सति [अपि] वयं सतां कृतवेदिनां कृतधियां येषां प्रभूणां स्नेहात् पुत्रेभ्यः अभिन्नाः [आस्म] ; पापेन येन लोकस्य परीक्षकाः ते क्षितिभृतः क्षताः, पुंसां प्रयत्नच्छिदः तस्य विधेः इदं विपुलं विलसितम् ॥२०॥

---

পুত্রঃ" ইত্যাদি শ্লোকটাকে যুষ্মৎপদের স্থানে অস্মৎপদ এবং অস্মৎপদের স্থানে যুষ্মৎপদ পরিবর্ত্তিত করিয়া পাঠ করিলেন)।

মলয়কেতু। ( পত্র ও অলঙ্কারের থলি দেখাইয়া ) এ গুলি এখন কি ?

রাক্ষস। (অশ্রুপাতের সহিত) এ গুলি বিধির খেলা, কিন্তু চাণক্যের নহে। কারণ,—

---

(২০) কৃতধিয়ঃ যেষাং ন ভিন্না বয়ম্ ।

मलयकेतुः । सक्रोधम् । किमद्यापि निह्नूयत एव । विधे-र्विलसितमिदं न ममेति । अनार्य्य ! (भ)

"विधेर्विलसितमिदम्" इति श्लोकमेव विवृण्वन्नाह भवत्ब इति । परिभावधामनि वैतनग्रहणेन भाव्यावहत्वात् अपमानास्पदे, भृत्यत्वे अस्मासु दासत्वे सत्यपि, वयम्, सता साधुस्वभावानाम्, कृतवेदिनां कृतज्ञानां कृतोपकारस्मर्त्तॄणामित्यर्थः, कृतधियां शिक्षितबुद्धीनाम्, येषां प्रभूणां स्वामिनां नन्दानाम्, स्नेहानुरागसत्त्वात्, पुत्रेभ्यस्तेषामेव तनयेभ्यः, अभिन्नाः अभिन्ना एव आस्म इति शेषः ; पापेन पापानवन्धनदुःखदायिना, येन विधिना, लोकस्य लोकचरित्रस्य, परीक्षकाः सर्वथा द्रष्टारः अभिज्ञा इत्यर्थः, ते क्षिति-भृतो राजानो नन्दाः, क्षता नाशिताः, पुंसां लोकानाम्, समस्तचित्रः सर्वप्रकारचेष्टा-नाशकस्य, तस्य विधेर्दैवस्यैव, इदं विपुलं विशालम्, विलसितं खेलितं चेष्टित-मिति तात्पर्य्यम् ; न पुनश्चाणक्यस्य ।थ ः । अन्यथा कथं मया तदनुकारस्य मौलम्, कथं वा भवागमनकाले तन्मध्यादेवैकं पारावृतामात भावः ।

अत्र पुत्राभिन्नत्वं प्रति कृतवेदितामिति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्य-लिङ्गमलङ्कारः, विधेरेवेदं विलसितं न पुनश्चाणक्यस्येति अन्यव्यपोहनादार्थी परि-संख्या, तृतीयचरणे वृत्त्यनुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः । आस्म इत्यनु-क्तावपि न न्यूनपदता दोषः, प्रभृति गुण एव वक्तुर्विषादमयत्वात् "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति साहित्यदर्पणात् । प्रसादो गुणः, वैदर्भी च रीतिः ।

विलसितमिति भावे क्तः । शार्दूलविक्रीडितं वृत्तम् ॥२०॥

(भ) मलयेति । अद्यापि इदानीमपि यथेष्टभ्रमणेन 'तवैवायं सर्वो व्यापारः' इति निश्चयकालेऽपीत्यर्थः, किं कथम्, निह्नूयते गोप्यते एव । केन प्रकारेण निह्नू-

অপমানের স্থান দাসত্ব থাকলেও, সৎস্বভাব কৃতজ্ঞ এবং শিক্ষিত বুদ্ধি যে প্রভুগণের স্নেহবশতঃ আমরা তাঁহাদের পুত্র হইতে অভিন্নই ছিলাম ; লোকচরিত্রাভিজ্ঞ সেই রাজগণকে যে পাপিষ্ঠ বিধি নষ্ট করিয়াছে, মানুষের সমস্তচেষ্টানাশক সেই বিধিরই এই একটা বিশাল খেলা (কিন্তু চাণক্যের নহে) ॥২০॥

कन्यां तीव्रविषप्रयोगविषमां कृत्वा कृतघ्न ! त्वया
विस्रम्भप्रवणस्तदा मम पिता नीतः कथाशेषताम् ।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो विक्रेतुमेते वयम् ॥२१॥

यत इत्याह विधेरित्यादि । इति अनेन प्रकारेणेत्यर्थः अतएव सम्बोधयति अनार्य्य ! आर्य्यविपरीतत्वात् निकृष्ट इति ।

अन्वयः—[हे) कृतघ्न ! त्वया तीव्रविषप्रयोगविषमां कन्यां कृत्वा तदा विस्रम्भप्रवणः मम पिता कथाशेषतां नीतः । सम्प्रति (च] रिपोः मन्त्राधिकारे आहितगौरवेण भवता प्रणयाय एते वयं मांसवत् विक्रेतुं प्रारब्धाः, अहो ! ॥२१॥

कार्य्यतोऽप्यनार्य्यतां प्रतिपादयितुमाह कन्यामिति । हे कृतघ्न ! उपकारिणः प्रत्यपकारकारित्वं कृतघ्नत्वं हे तादृश । त्वया, तीव्रविषस्य प्रयोगेण प्रदानेन विषमां भयानकां कन्याम्, कृत्वा शय्यायामर्पयित्वा, तदा तस्मिन् काले विस्रम्भप्रवणः त्वय्येव विश्वासनिरतः, मम पिता पर्व्वतेश्वरः, कथाशेषतां नाममात्रावशिष्टताम्, नीतः प्रापितः विनाशित इत्यर्थः । सम्प्रति च, रिपोः शत्रोश्चन्द्रगुप्तस्य, मन्त्राधिकारे मन्त्रणादानकार्य्ये मन्त्रिपदे इति तात्पर्य्यम्, आहितं स्वयमेव दृढ़शय्यापारेण स्थापितं गौरवं सम्मानं येन तेन तादृशेन, भवता त्वया, प्रणयाय तस्यैव रिपोः सौहार्द्द-लाभाय, एते वयम् एषोऽहमित्यर्थः, मांसवदेव, विक्रेतुम्, प्रारब्धा उपक्रान्ताः । इति अहो आश्चर्य्यम् । अतः कार्य्यतोऽपि ते अनिर्व्वचनीयमेवानार्य्यत्वमिति भावः ।

अत्र मांसवदिति तुल्यार्थे वतिप्रत्ययादार्थीपमालङ्कारः । तेन च त्वया मयि जड़त्वं सम्भावितं तत्र न सम्भवष्यतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । रौद्रो रसः, प्रसादो गुणः, वैदर्भी च रीतिः । त्रोटकं नाम गर्भसन्धेरङ्गम्, "त्रोटकं पुनः ।

মলয়কেতু । [ক্রোধের সহিত] 'এটা বিধাতার খেলা, কিন্তু আমার নহে' এই বলিয়া এখনও গোপনই করিতেছ কেন ? নীচ !

[...] ... प्रलयाय ... ।

राक्षसः । स्वगतम् । अयमपरो गण्डस्योपरि विस्फोटः । प्रकाशम् । कर्णौ पिधाय । शान्तं पापम्, शान्तं पापम् । नाऽहं पर्वतेश्वरे विषकन्यां प्रयुक्तवान् । (ञ)

मलयकेतुः । केन तर्हि व्यापादितस्तातः ? । (ट)

---

सं रब्धवाक्" इति लक्षणात् । गर्हणं नाम नाट्यलक्षणञ्च, "दूषणोद्घोषणायान्तु भर्त्सना गर्हणन्तु तत्" इत्यभिधानात् । शार्दूलविक्रीडितं वृत्तम् ॥२१॥

(ञ) राक्षस इति । अयं पर्वतेश्वरहत्यापवादः, गण्डस्य पिटकस्य विस्फोटस्योपरि यावत्, विस्फोटो व्रणविशेषस्वरूपः । तथा च यथा गात्रे एकस्मिन् विस्फोटे जाते यादृशी वेदना जायते, तदुपरि विस्फोटान्तरे जाते तु ततोऽप्यधिका वेदना समुत्पद्यते ; तथा मलयकेतुजिघांसापवादे आरोपिते यादृशं दुःखं जातम्, पर्वतकहत्यापवादे आरोपिते तु ततोऽप्यधिकं दुःखं जातमिति भावः । शान्तं पापम्, ईदृशं न वाच्यमित्यर्थः, तस्यातिशायने द्विरुक्तिः ।

अत्र विस्फोटो विस्फोटस्वरूप इति निरङ्गं केवलरूपकमलङ्कारः ।

"गण्डः कपोले पिटके योगभेदे च गण्डके । गण्डः प्रवीरे चिह्ने स्यात् अश्वभूषणबुद्बुदे ।" इति विश्वः । पिटक एव विस्फोटः ।

(ट) मलयेति । तर्हि त्वया विषकन्यायाः प्रयोगे कृते ।

---

কৃতঘ্ন ! তুমি, তীব্রবিষদায়িনী ভয়ঙ্কর একটা কন্যাকে প্রেরণ করিয়া, ( তোমারই উপরে ] অত্যন্তবিশ্বস্ত আমার পিতাকে নামমাত্রে অবশিষ্ট করিয়াছ। এখনও শত্রুর মন্ত্রিত্বপদে গৌরবস্থাপনপূর্ব্বক শত্রুরই প্রণয়লাভের জন্য তুমি আমাকে মাংসেরই মত বিক্রয় করিতে প্রবৃত্ত হইয়াছ ; কি আশ্চর্য্য ! ॥২১॥

রাক্ষস। ( স্বগত ] এই আর একটা বিস্ফোটের উপরে বিস্ফোট। [ প্রকাশ্যে। কর্ণযুগল আবৃত করিয়া ) ও কথা বলিবেন না, ও কথা বলিবেন না। আমি পর্বতেশ্বরের প্রতি বিষকন্যা প্রয়োগ করি নাই।

মলয়কেতু। কে তবে পিতৃদেবকে হত্যা করিল ?

राक्षसः। दैवमत्र प्रष्टव्यम्। (ठ)

मलयकेतुः। सक्रोधम्। दैवमत्र प्रष्टव्यम्, न क्षपणको जीवसिद्धिः!। (ड)

राक्षसः। स्वगतम्। कथं जीवसिद्धिरपि चाणक्यप्रणिधिः। हन्त! हृदयमपि मे रिपुभिः स्वीकृतम्। (ढ)

मलयकेतुः। सक्रोधम। भासुरक! आज्ञाप्यतां शिखरसेनः

---

(ठ] राक्षस इति। अत्र पर्वतकहत्याविषये, दैवम् अदृष्टम्। तथा च पर्वतकस्यैव दुर्दैवं सहायीकृत्य चाणक्येनैवासौ व्यापादित इत्याशयः।

(ड] मलयेति। तव सुहृदा जीवसिद्धिनैव कथितं यत 'तव पिता पर्वतको राक्षसेनैव विषकन्यया घातितः" इति। तेन च तत् सत्यमेवेत भावः।

(ढ) राक्षस इति। कथमिति विषादे। चाणक्यस्य प्रणिधिश्चरः। अन्यथा कथमसौ मद्विरुद्धं वदेदिति भावः। स्वीकृतम् आयत्तीकृतम्; हृदयतुल्यसुहृदो जीवसिद्धेरपि चाणक्यस्यैव चरत्वेन तस्यैव वशीभूतत्वादित्यभिप्रायः।

अहो! इदानीं खल्वीदृशीमनुशोचनां कुर्वन् राक्षसः पदे पदे निजां विच्युतिमेव महतीं द्योतयति। तथा च अज्ञातकुलशीलानां जीवसिद्धिप्रभृतीनां बन्धुत्वेन परिग्रह एव प्रथमो दोषः; परतस्त्विदानीं शकटदासस्य अनाह्वानम्, युक्तियुक्तमुत्तरं विना 'दैवमत्र प्रष्टव्यम्" इत्युत्तरदानम्, आसन्नविपदि प्रतीकारचेष्टां विना अनुशोचना च विच्युतिः। आकस्मिकविपत्तेर्विह्वलतयेति चेत् तादृशपदस्थस्य विह्वलतैव गरीयान् दोषः। इत्यमालोचनीयम्।

---

রাক্ষস। এবিষয়ে দৈবকে জিজ্ঞসা করা উচিত।

মলয়কেতু। (ক্রোধের সহিত) এ বিষয়ে দৈবকে জিজ্ঞাসা করা উচিত; কিন্তু বৌদ্ধসন্ন্যাসী জীবসিদ্ধিকে নহে!

রাক্ষস। (স্বগত) আঁ্যা। জীবসিদ্ধিও চাণক্যের চর। হায়! আমার হৃদয়টাকেও শত্রুরা আয়ত্ত করিয়াছে।

সেনাপতিঃ ‘যে এতেন রাক্ষসেন সহ সৌহার্দ্দমুৎপাদ্য অস্মচ্ছরীরাভিদ্রোহেণ চন্দ্রগুপ্তমারাধয়িতুকামাঃ পঞ্চ রাজানঃ। কৌলূতশ্চিত্রবর্ম্মা, মলয়নৃপতিঃ সিংহনাদঃ, কাশ্মীরঃ পুষ্করাক্ষঃ, সিন্ধুরাজঃ সুষেণঃ, পারসীকাধিপো মেঘনাদ ইতি। তত্র যে ত্রয়ঃ প্রথমে মদীয়াং ভূমিং কাময়ন্তে, তে গম্ভীরশ্বভ্রমুপনীয় পাংশুভিঃ পূর্য্যন্তাম্। ইতরৌ হস্তিবলকামুকৌ হস্তিনৈব ঘাত্যেতাম্’ ইতি। (ণ)

[ণ] মলয়েতি। ভাসুরকেতি নাম্না সন্নিহিতভৃত্যস্য সম্বোধনম্। শিখরং শিখরসদৃশ্যা উৎকৃষ্টা সেনা যস্য স শিখরসেনো নাম। অস্মাকং মম শরীরস্য অভিদ্রোহেণ বিনাশেন, আরাধয়িতুকামাঃ সন্তোষয়িতুমভিলাষুকাঃ। কে তে রাজান ইত্যাহ কৌলূত ইতি। তত্র তেষু মধ্যে, প্রথমে প্রথমোক্তাঃ, ভূমিং ভূমিসম্পত্তিম্, গম্ভীরশ্বভ্রং গভীরভূরন্ধ্রম, উপনীয় প্রাপয্য তত্র নিপাত্যেত্যর্থঃ, পাংশুভির্ধূলিভিঃ। ভূমিকামত্বাৎ ভূমিরন্ধ্রপ্রবেশনয়ৈব তেষাং হত্যেতি ভাবঃ। ইতরৌ সুষেণমেঘনাদৌ, ঘাত্যেতাং বিনাশ্যেতাম্। হস্তিসৈন্যকামুকত্বাৎ হস্তিনৈব তয়োর্ঘাতনমিত্যাশয়ঃ। “রন্ধ্রং শ্বভ্রং বপা শুষিঃ” ইত্যমরঃ।

মলয়কেতু। (ক্রোধের সহিত) ভাসুরক! সেনাপতি শিখরসেনকে এই আদেশ কর, যে পাঁচজন রাজা এই রাক্ষসের সহিত সৌহার্দ্দস্থাপনপূর্ব্বক আমাকে হত্যা করিয়া চন্দ্রগুপ্তকে সন্তুষ্ট করিতে ইচ্ছা করে। যথা কুলূতদেশের রাজা চিত্রবর্ম্মা, মলয়দেশের রাজা সিংহনাদ, কাশ্মীরদেশের রাজা পুষ্করাক্ষ, সিন্ধুদেশের রাজা সুষেণ এবং পারস্যদেশের রাজা মেঘনাদ। ইহাদের মধ্যে প্রথম যে তিন জন আমার ভূসম্পত্তি লাভ করিতে ইচ্ছা করে, তাহাদিগকে গভীর গর্ত্তে ফেলিয়া দিয়া ধূলি দ্বারা সে গর্ত্ত পূর্ণ করিয়া ফেলুক; আর অপর দুই জন আমার হস্তিসৈন্য লাভ করিতে ইচ্ছা করে, সুতরাং তাহাদিগকে হস্তী দ্বারাই হত্যা করা হউক।

पुरुषः । जं कुमारो आणवेदि । इति निष्क्रान्तः । [ यत् कुमार आज्ञापयति ] ।

मलयकेतुः । सक्रोधम् । राक्षस ! राक्षस ! नाहं विस्रम्भघाती राक्षसः, मलयकेतुः खल्वहम् । तद्गच्छ, समाश्रीयतां सर्वात्मना चन्द्रगुप्तः । पश्य— (त)

विष्णुगुप्तञ्च मौर्य्यञ्च सममप्यागतौ त्वया ।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः ॥२२॥

---

अहो ! मलयकेतुरपि नितरामविमृष्यकारी शूकरवदेकाग्रहश्च । येनासौ हतभाग्यानां चित्रवर्म्मादीनां वचनमश्रुत्वैव तेषां वधमाज्ञप्तवान् । ईदृशस्य प्रभोः ईदृशस्य मन्त्रिणश्च विपक्षतया प्राप्तत्वादेव च चाणक्यस्य जयः सुकर आसीदित्यालोचनीयम् ।

[त] मलयेति । विस्रम्भघाती विश्वासघातकः । मलयकेतुः खल्वहमित्यनेनात्मनो महावीरत्वादविस्रम्भघातित्वं प्रकाश्ययोद्धृत्वञ्च सूचितम् । सर्वात्मना सर्वप्रयत्नेन ।

**अन्वयः**—दुर्नयः त्रिवर्गम् इव अहं त्वया समम् आगतौ अपि विष्णुगुप्तञ्च मौर्य्यञ्च (एतौ] उन्मूलयितुम ईशः (अस्मि) ॥२२॥

विष्णुगुप्तमिति । दुर्नयो दुष्टा नीतिः असमीचीनो व्यवहार इति यावत्, त्रयाणां धर्म्मार्थकामानां वर्गं समूहमिव, अहम्, त्वया राक्षसेन. समं सह. आगतौ यौच 'मप-

---

পুরুষ। কুমার! যাহা আদেশ করেন। ( এই বলিয়া চলিয়া গেল)

মলয়কেতু। (ক্রোধের সহিত) রাক্ষস! রাক্ষস! আমি বিশ্বাসঘাতক রাক্ষস নহি, আমি মলয়কেতু। অতএব যাও, সর্ব্বপ্রযত্নে যাইয়া চন্দ্রগুপ্তকে আশ্রয় কর। দেখ—

দুর্নীতি যেমন ধর্ম্ম, অর্থ ও কামকে নষ্ট করিতে সমর্থ হয়; তেমন

भागुरायणः । कुमार ! कृतं कालहरणेन । साम्प्रतं कुसुम-पुरोपरोधायाज्ञाप्यन्तामस्मद्बलानि (थ) ।

गौड़ीनां लोध्रधूलीपरिमलधवलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशुस्तम्भा बलानां तुरग-खुर-पुट-क्षोद-लब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गज-मद-सलिल-च्छिन्न-मूलाः पतन्तु ॥२३॥

स्थितावपि, विष्णुगुप्तं चाणक्यञ्च, मौर्य्यं चन्द्रगुप्तञ्च, एतौ, उन्मूलयितुम् उत्पादयितुम्, ईशः समर्थोऽस्मि । अतएव परित्यागे क्वचिदपि न मम क्षतिरिति भावः ।

अत्र प्रतीपमालङ्कारः, वीरो रसः, प्रसादो गुणः, वैदर्भी च रीतिः ॥२२॥

[थ) भागुरेति । कालहरणेन अयथासमयक्षेपेण, कृतमलम् ।

अन्वयः—बलानां तुरग-खुर-पुट-क्षोद-लब्धात्मलाभाः पांशुस्तम्भाः, लोध्र-धूलि-परिमल-धवलान् गौड़ीनां कपोलान् धूम्रयन्तः, भ्रमर-कुल-रुचः कुञ्चितस्य अलकस्य कृष्णिमानं क्लिश्नन्तः, गज-मद-सलिल-च्छिन्न-मूलाः (च सन्तः) शत्रूणाम् उत्तमाङ्गे पतन्तु ॥२३॥

गौड़ीनामिति । बलानामस्मत्सैन्यानाम्, ये तुरगा अश्वास्तेषां खुरपुटैः क्षोदेन भूतलस्य चूर्णतया लब्ध आत्मलाभ उत्पत्तिर्यैस्ते तथोक्ताः, पांशुस्तम्भा धूलीराशयः, लोध्राणां तदाख्यपुष्पाणां धूल्यः परागा एव परिमला गन्धद्रव्याणि तैर्धवलान् शुभ्रवर्णी-भूतान्, गौड़ीनां गौड़देशवासिनीनां रमणीनाम्, कपोलान् गण्डदेशान्, धूम्रयन्तः तेषु पतनेन धूम्रवर्णीकुर्वन्तः, आत्मनां धूम्रवर्णत्वादिति भावः ; तथा भ्रमरकुलस्य रुचिश्च

আমি, তোমার সহিত উপস্থিত হইলেও চাণক্য এবং চন্দ্রগুপ্তকে নষ্ট করিতে সমর্থ হইব ॥২২॥

ভাগুরায়ণ। কুমার! আর সময়ক্ষেপ করায় প্রয়োজন নাই। এখন কুসুমপুর অবরোধের জন্য আমাদের সৈন্যগণকে আদেশ করুন।

(২৩)···परिमलबहुलान् धूम्रयन्तः···पांशुस्तम्भाः ।

इति सपरिजनो निष्क्रान्तो मलयकेतुः [द) ।

राक्षसः । सावेगम् । हा धिक् कष्टम् । तेऽपि घातिताश्चित्रवर्म्मादयस्तपस्विनः । तत् कथं सुहृद्विनाशाय राक्षसश्चेष्टते, न रिपुविनाशाय । तत् किमिदानीं मन्दभाग्यः करवाणि (ध) ।

---

रुक् कान्तिर्यस्य तस्य, कुञ्चितस्य कुटिलीभूतस्य, अलकस्य गौडीनामेव चूर्णकुन्तलस्य, कृष्णिमानं कृष्णवर्णम्, क्षिपन्तः स्वपतनेन प्रायो धूम्रवर्णीकरणात् अपनयन्तः; तथा गजानाम् अस्मदीयहस्तिनां मदसलिलैर्दानजलैः छिन्नानि पृथक् कृतानि मूलानि निम्नभागा येषां ते तादृशाश्च सन्तः, शत्रूणाम्, उत्तमाङ्गे मस्तके, पतन्तु आक्रमणकाले इति भावः ।

अत्र धूम्रीकरणस्य कृष्णिमलोपस्य च असम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिरलङ्कारः, स च भ्रमरकुलरुच इति लुप्तोपमया सङ्कीर्य्यते । वीरो रसः, ओजो गुणः, गौड़ी च रीतिः ।

धूम्राम् कुर्वन्त इति धूम्रयन्तः, "इन् कारितं धात्वर्थे" इति धूम्रशब्दादिन् । कृष्णस्य भावः कृष्णिमा पृथ्व्यादित्वादिमन् । स्रग्धरा वृत्तम् ॥२३॥

(द) इतीति । इति भागुरायणोक्तेः परमित्यर्थः ।

[ध) राक्षस इति । हा धिक् कष्टमित्येकमेवाव्ययम् अत्यन्तविषादे । तपस्विनः शोच्याः, कारणं विना घातितत्वादिति भावः । सुहृदां चित्रवर्म्मादीनामेव विनाशाय

আমাদের সৈন্যের অন্তর্গত অশ্বগণের খুরের আঘাতে উৎপন্ন ধূলিরাশি, গৌড়দেশবাসিনী রমণীগণের লোধ্রপুষ্পরেণু দ্বারা শুভ্রবর্ণ গণ্ডদেশকে ধূম্রবর্ণ করিয়া, তাহাদেরই ভ্রমরতুল্যকৃষ্ণবর্ণ কুঞ্চিত কেশকলাপের কৃষ্ণবর্ণকে অপনীত করিয়া এবং হস্তিগণের মদজলে ছিন্নমূল হইয়া, শত্রুগণের মস্তকে যাইয়া পতিত হউক ॥২৩॥

[ইহার পরে মলয়কেতু ভাগুরায়ণপ্রভৃতি পরিজনগণের সহিত চলিয়া গেলেন)

কিং গচ্ছামি তপোবনং ন তপসা শাম্যেৎ সবৈরং মনঃ,
কিং ভর্তৄননুযামি জীবতি রিপৌ স্ত্রীণামিয়ং যোগ্যতা।
কিং বা খড়্গসখঃ পতাম্যরিবলে নেদং ন যুক্তং ভবেৎ
চেতশ্চন্দনদাসমোক্ষরভসং রুন্ধ্যাৎ কৃতঘ্নং ন চেৎ ॥২৪॥

---

চেষ্টতে। ইদানীমপ্যেতৎপ্রত্যবস্থানেনেত্যর্থঃ। তথা চ ইদানীমপি এতৎপ্রত্যবস্থানে শ রক্ষস্য চিত্রবর্ম্মাদিবিনাশস্য বাধায়া অসম্ভবাৎ তন্নষ্টৈব কৃতা স্যাদিতি ভাবঃ। অত্র বিদ্রবো নাম গর্ভসন্ধ্যঙ্গম্, "শঙ্কাভয়ত্রাসকৃতঃ সম্ভ্রমো বিদ্রবো মতঃ" ইতি লক্ষণাৎ।

**অন্বয়ঃ**—কিং তপোবনং গচ্ছামি? তপসা সবৈরং মনঃ ন শাম্যেৎ; কিং ভর্তৄন্ অনুযামি? রিপৌ জীবতি ইয়ং স্ত্রীণাং যোগ্যতা। কিং বা খড়্গসখঃ (সন্) অরিবলে পতামি, ইদং যুক্তং ন ভবেৎ (ইতি] ন; কিন্তু চন্দনদাসমোক্ষরভসং কৃতঘ্নং চেতঃ চেৎ ন রুন্ধ্যাৎ ॥২৪॥

কিমিতি। কিং তপোবনং গচ্ছামি? তন্নেত্যাহ—তপসা, সবৈরং শত্রুতাযুক্তং মম মনঃ, ন শাম্যেৎ বৈরাপগমেন শান্তিং ন লভেত; বৈরস্যৈব প্রবলত্বাদিতি ভাবঃ। তর্হি কিং ভর্তৄন্ নন্দাদীন্ প্রভূন্, অনুযামি উদ্বন্ধনাদিনা মরণেন অনুগচ্ছামি? তদপি নেত্যাহ—রিপৌ চন্দ্রগুপ্তে চাণক্যে চ জীবতি সতি, ইয়ং ভর্ত্রনুগমনাত্মিকা, স্ত্রীণাং যোগ্যতা যোগ্যা ক্রিয়া; তেজঃশূন্যতাসূচকত্বাদিত্যাশয়ঃ। কিং বা খড়্গস্য সখা খড়্গসখঃ কৃপাণপাণিঃ সন্নিত্যর্থঃ, অরিবলে শত্রুসৈন্যমধ্যে, পতামি তন্নিহন্তুমেব প্রবিশামি? ইদং যুক্তং ন ভবেদিতি ন, অপি তু ইদমেব যুক্তমুচিতং ভবেদিত্যর্থঃ; বাস্ত-

---

রাক্ষস। (আবেগের সহিত) হায়! বড়ই কষ্ট। শোচনীয় সেই চিত্রবর্ম্মাপ্রভৃতিকেও হত্যা করাইল। হায়! রাক্ষস বন্ধুবিনাশের জন্য চেষ্টা করিবে, কিন্তু শত্রুবিনাশের জন্য চেষ্টা করিবে না। তবে, মন্দভাগ্য আমি এখন কি করি—

---

[২৪) নৈতদ্ যুক্তং ভবেৎ।

ইতি নিষ্ক্রান্তাঃ সর্ব্বে।

## ইতি পঞ্চমোঽঙ্কঃ ॥০॥

বিকপুরুষত্বপ্রকাশাদিত্যভিপ্রায়ঃ। তর্হি তদেব ক্রিয়তামিত্যাহ—চন্দনদাসস্য মোক্ষে কারাগারাৎ মুক্তৌ রভসো বেগো যস্য তাদৃশম্, কৃতঘ্নম্ উপকারিবধস্য প্রত্যুপকার-ত্বং মুখ্যাদিতি ভাবঃ, চেতঃ মর্ম চ মনঃ বার্ত্তং, চেদ্যদি, ন রুন্ধ্যাৎ অরিবলপ্রবেশে ন প্রতিবধ্নীয়াৎ। তথা চ একাকিনঃ মম অরিবলপ্রবেশে মরণাবশ্যম্ভাবেন চন্দনদাসস্য মোক্ষো ন স্যাদিতি বিভাব্য মন্মন এব তৎপ্রবেশে মাং রুণদ্ধীতি ভাবঃ।

অত্র আবেগাদয়ো ব্যভিচারিভাবা জ্ঞেয়াঃ। প্রসাদো গুণঃ, বৈদর্ভী চ রীতিঃ। শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥২৪॥

ইতি শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচিতায়াং মুদ্রারাক্ষসনাটক-টীকায়াং চাণক্যচাতুরীসমাখ্যায়াং পঞ্চমাঙ্কবিবরণম্ ॥০॥

---

তপোবনে যাইব কি? (না, তাহা হইবে না; কারণ) তপস্যা দ্বারা শত্রুদ্বেষী হৃদয় শান্তি লাভ করিবে না। তবে কি প্রভুদের অনুসরণ করিব? (তাহাও হইবে না; কেন না—) শত্রু জীবিত থাকিতে তাহা করা স্ত্রীলোকের কার্য্য। তবে কি তরবারি ধারণ করিয়া শত্রুসৈন্যের উপরে পড়িব? ইহাই সঙ্গত হইতে বটে; কিন্তু চন্দনদাসের মুক্তির জন্য ব্যগ্র অকৃতজ্ঞ চিত্ত যদি বাধা না দিত ॥২৪॥

[ইহার পর সকলেই চলিয়া গেল)

# षष्ठोऽङ्कः।

———:*:———

ततः प्रविशत्यलङ्कृतः सहर्षः सिद्धार्थकः (क)।

सिद्धार्थकः। जअदि जलदणीलो केसवो केसिघादी
जअदि अ जणदिट्ठीचन्दमा चन्दउत्तो।
जअदि जअणसज्जं जा अकाऊण सेण्णं
पडिहदपरपक्खा अज्ज चाणक्कणीदी॥१॥

---

(क) तत इति। मलयकेतुना सह राक्षसस्य भेदसम्पादने सिद्धार्थकस्यैव प्रधानपात्रत्वात् चन्द्रगुप्तचाणक्यप्रदत्तैः पारितोषिकालङ्कारैरलङ्कृत इत्यर्थः, अतएव सहर्ष इत्याशयः।

इतः प्रभृतिषष्ठाङ्कसमाप्तिपर्य्यन्तो विमर्शसन्धिः। तथा चात्र उद्बन्धनेन मरणप्रवृत्तस्य पुरुषस्य चरितं प्रकरी नाम अर्थप्रकृतिः। यथा दर्पणे—

"प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।"

मलयकेतुकृतपरित्यागेन तदयोगरूपविघ्नाभावात् राक्षसस्य निश्चितप्राप्तिरूपा नियताप्तिर्नाम कार्य्यावस्था। यथा तत्रैव—

"अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता।"

तथा भेदव्यापारस्य निष्पन्नतया राक्षसग्रहणरूपमुख्यफलस्य उपायभूतश्चाणक्योत्साहो गर्भसन्ध्यपेक्षया आधिक्येन प्रकाशितः; तथा राक्षसस्य यथाकथञ्चिन्निरुद्दिष्टतया सोत्साहः सान्तरायः। तथा च तत्रैव—

'यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः॥"

अत्रापि अपवादादीनि त्रयोदशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः।

---

(१)···जअदि जअणकज्जं जाव काऊण सव्वं···।

[जयति जलदनील: केशव: केशिघाती
जयति च जनदृष्टि-चन्द्रमाश्चन्द्रगुप्त: ।
जयति जयनसज्जं या अकृत्वा च सैन्यं
प्रतिहतपरपक्षा आर्य्यचाणक्यनीति:) ॥

दाव चिरस्स कालस्स पिअवअस्सं समिद्धत्थअं पेक्खामि । परिक्रम्यावलोक्य च । एसो मे पिअवअस्सो समिद्धत्थओ इदो एव्व उवसप्पदि । जाव णं उवसप्पामि । [तावच्चिरस्य कालस्य प्रियवयस्यं

---

जयतीति । जलदो मेघ इव नील: श्यामवर्ण:, केशिघाती केशिनामकदैत्यहन्ता, केशवो नारायण:, जयति सर्वोत्कर्षेण वर्त्तते । अन्यजये वक्तव्ये आदौ इष्टदेवताजयस्य सर्वथा वक्तव्यत्वादिदमप्रासङ्गिकमप्युक्तम् । जनानां दृष्टौ दर्शनविषये चन्द्रमा: सौन्दर्य्येणाह्लादजनकत्वाच्चन्द्र इव स:, चन्द्रगुप्तश्च जयति ; असाधारणभाग्यवत्त्वादिति भाव: । तथा या आर्य्यचाणक्यनीति:, सैन्यम्, जयने शत्रुविजयव्यापारे सज्जं सन्नद्धम्, अकृत्वा च अविधायापि, प्रतिहत: पराजित: परपक्ष: शत्रुवर्गो यया सा तादृशी जाता, सा आर्य्यचाणक्यनीतिश्च, जयति ; अदृष्टाश्रुतपूर्वत्वादित्याशय: ।

अत्र सैन्यसज्जत्वरूपकारणाभावेऽपि परपक्षप्रतिहननरूपकार्य्योत्पत्तेर्विभावनालङ्कारो लुप्तोपमाभ्यां संसृज्यते । प्रसादो गुण:, वैदर्भी रीति:, मालिनी च वृत्तम् ॥१॥

(ख) तावदिति । कालस्यात्यानन्तर्य्यसम्बन्धे षष्ठी, बहुकालात् परमित्यर्थ: ;

তদনন্তর অলঙ্কৃত অবস্থায় আনন্দিতচিত্ত সিদ্ধার্থক প্রবেশ করিল।

সিদ্ধার্থক। কেশিদৈত্যনিহন্তা মেঘতুল্যনীলবর্ণ নারায়ণের জয় হউক; এবং লোকদৃষ্টিতে চন্দ্রতুল্য চন্দ্রগুপ্তের জয় হউক; আর, যে চাণক্যনীতি বিজয়ের জন্য সৈন্যসজ্জা না করিয়াও শত্রুপক্ষ জয় করিয়াছে, মাননীয় চাণক্যের সেই নীতির জয় হউক ॥১॥

বহুকালের পর প্রিয়বয়স্য সমিদ্ধার্থকের সঙ্গে দেখা করিব। (পাদ-ক্ষেপপূর্ব্বক, দর্শন করিয়া) এই আমার প্রিয়বয়স্য সমিদ্ধার্থক এই দিকেই আসিতেছে। ইহার নিকটে যাই।

समिद्धार्थकं पश्यामि । एष मे प्रियवयस्यः समिद्धार्थक इत एव उपसर्पति । यावदेनमुपसर्पामि] [ख) ।

ततः प्रविशति समिद्धार्थकः ।

समिद्धार्थकः । सन्दावे तारेसाणं गेह्सवे सुहाअन्ताणं ।
हिअअट्ठिदाणं विहवा विरहे मित्ताणं दूणन्ति ॥२
(सन्तापे तारेशानां गेहोत्सवे सुखायमानानाम् ।
हृदयस्थितानां विभवा विरहे मित्राणां दुन्वन्ति) ॥

सुदं च मए मलअकेदुकडआदो पिअवअस्सो सिद्धत्थओ आअदो त्ति । ता अस्सेसामि । इति परिक्रामति । विलोक्य । एसो सिद्धत्थओ । अवि सुहं पिअवअस्सस्स ? । (श्रुतञ्च मया मलयकेतु-कटकात् प्रियवयस्यः सिद्धार्थकः आगत इति । एनमन्विष्यामि । एष सिद्धार्थकः । अपि सुखं प्रियवयस्यस्य ? । (ग)

---

भेदसंघटनार्थमियन्तं कालं यावत् राक्षसान्तिक एव निवासादिति भावः । समिद्धः सम्यग् दीप्तः अर्थो बुद्धिरूपं वस्तु यस्येति समिद्धार्थकस्तम् ।

सन्ताप इति । सन्तापे दुःखमेव ग्रीष्मस्तस्मिन्, तारायां नक्षत्राणामीशा अधिपतयश्चन्द्रास्तेषां शीतलत्वजननसाम्यात् तत्स्वरूपाणामित्यर्थः, गेहोत्सवे गेहेषु आनन्दव्यापारे, सुखायमानानां योगदानेन सुखं जनयताम्, हृदयस्थितानां चिन्तावशात् सर्वदैव मनसि विद्यमानानाम्, मित्राणां सुहृदाम्, विरहे विच्छेदे, विभवा धनसम्पदः, दुन्वन्ति साहचर्य्येण विभवसाध्यसुखानुभवाभावात् सन्तापयन्ति ; अत एव मित्रं सिद्धार्थकमन्विष्यामीति भावः ।

अत्र सन्तापे तारेशानामिति श्लिष्टपरम्परितरूपकमलङ्कारः ॥२॥

---

তাহার পর সমিদ্ধার্থক প্রবেশ করিল।

সমিদ্ধার্থক। সন্তাপের সময় চন্দ্রস্বরূপ, গৃহের উৎসবে সুখজনক এবং সর্ব্বদাই হৃদয়ে বিদ্যমান বন্ধুজনের বিচ্ছেদের সময় ধনসম্পত্তি দুঃখ উৎপাদন করে ॥২॥

सिद्धार्थकः। विलोक्य। कधं सुहिदो ज्जेव पिअवअस्सो समिद्धत्थओ। उपगम्य। अवि सुहं पिअवअस्सस्स? । (कथम् सुहृत् एव प्रियवयस्यः समिद्धार्थकः। अपि सुखं प्रियवयस्यस्य?)। (घ]

अन्योन्यमालिङ्गतः।

समिद्धार्थकः। अह वअस्स!, कुदो मे सुहं, जस्स तुमं चिरआलप्पवासपच्चागदोवि अणाचिक्खिअ वुत्तन्तं अण्णदो गदोसि त्ति। [अह वयस्य! कुतो मे सुखम्? यस्य त्वं चिरकालप्रवासप्रत्यागतोऽपि अनाख्याय वृत्तान्तम् अन्यत्र गतोऽसि इति]। [ङ)

सिद्धार्थकः। पसीददु पसीददु पिअवअस्सो। अहं क्खु

---

[ग] सुतमिति। मलयकेतोः कटकात् शिबिरात्। एतं सिद्धार्थकम्। सुखं मङ्गलमित्यर्थः।

(घ] सिद्धेति। इत एव अस्यामेव मद्दिशि। आगच्छतीति शेषः।

(ङ] समिद्धेति। अह इत्येव सम्बोधनार्थमव्ययम्। चिरकालं दीर्घसमयं यावत् यः प्रवासो विदेशावस्थितिस्तस्मात् प्रत्यागतोऽपि।

---

আমি শুনিয়াছি যে, প্রিয়বয়স্য সিদ্ধার্থক মলয়কেতুর শিবির হইতে আসিয়াছে। অতএব উহার অন্বেষণ করি। ( এই বলিয়া পাদক্ষেপ করিতে লাগিল ; তাহার পর দর্শন করিয়া ) এই যে সিদ্ধার্থক। প্রিয়-বয়স্যের মঙ্গল ত ?

সিদ্ধার্থক। প্রিয়সুহৃৎ সমিদ্ধার্থক যে এই দিকেই আসিতেছে। (নিকটে যাইয়া) প্রিয়সখার মঙ্গল ত ?

পরস্পর আলিঙ্গন করিল।

সমিদ্ধার্থক। সখা! আমার মঙ্গল হইবে কোথা হইতে ? তুমি বহুকাল যাবৎ বিদেশবাস করিয়া ফিরিয়া আসিয়াও, যাহার নিকট সে বৃত্তান্ত না জানাইয়া অন্য স্থানে গিয়াছিলে।

दिट्ठमेत्तो ज्जेव अज्जचाणक्केण आणत्तो, जधा सिद्धत्थअ ! गच्छ, एदं वुत्तन्तं पिअं पिअदंसणस्स देअस्स चन्दसिरिणो णिवेदेहि त्ति । तदो तस्स तं णिवेदिअ एव्वं अणुभूदपत्थिवप्पसादो अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोऽम्हि । प्रसीदतु प्रसीदतु प्रियवयस्यः । अहं खलु दृष्टमात्र एव आर्य्यचाणक्येन आज्ञप्तः, यथा सिद्धार्थक ! गच्छ, इमं वृत्तान्तं प्रियं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदय इति । ततस्तस्य तं निवेद्य एवम् अनुभूतपार्थिवप्रसादः अहं प्रियवयस्यं प्रेक्षितुं तव गेहं चलितोऽस्मि) । (च)

समिद्धार्थकः । वअस्स ! जदि मए एदं सुणिदव्वं भोदि, ता मं पि सुणावेहि ; किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति । (वयस्य ! यदि मया एतत् श्रोतव्यं भवति, तत् मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति । (छ)

---

[च) सिद्धे ति । इमं वक्ष्यमाणम्, प्रियं प्रीतिकरं वृत्तान्तमित्यन्वयः, देवस्य राज्ञः, चन्द्रस्य श्रीरिव श्रीः कान्तिर्यस्य तस्य चन्द्रगुप्तस्य समीप इत्यर्थः । एवम् अनेन निवेदनेन, अनुभूतो लब्धः पार्थिवस्य राज्ञश्चन्द्रगुप्तस्य प्रसादोऽनुग्रहो येन स तथोक्तः ।

(छ] समिद्धे ति । चन्द्रश्रियश्चन्द्रवत् सुन्दरस्य चन्द्रगुप्तस्य ।

---

সিদ্ধার্থক। প্রিয়সখা ! প্রসন্ন হও প্রসন্ন হও। দর্শন করিবামাত্রই মাননীয় চাণক্য আমাকে আদেশ করিলেন যে, 'সিদ্ধার্থক ! যাও, যাইয়া এই প্রীতিকর বৃত্তান্তটী প্রিয়দর্শন রাজা চন্দ্রগুপ্তের নিকট জানাও।' তাহার পর আমি রাজা চন্দ্রগুপ্তের নিকট সেই বৃত্তান্ত জানাইয়া, এই ভাবে রাজার অনুগ্রহ লাভ করিয়া, তোমার সঙ্গে সাক্ষাৎ করিবার জন্য তোমার বাড়ীই যাইতেছিলাম।

সমিদ্ধার্থক। বয়স্য ! এ বিষয়টা যদি আমার শ্রোতব্য হয়, তাহা

सिद्धार्थकः। पिअवअस्स ! तवापि किं असुणिदव्वं अत्थि ? ता णिसामेहि। अत्थि दाव अज्ज चाणक्क-णीदि मोहिद-मदिणा मलअकेदुहदएण णिराकरिअ रक्खसं हदा चित्तवम्म-प्पमुहा प्पहाणा पञ्च पत्थिवा। तदो असमिक्खकारी एसो दुरा-आरो त्ति कदुअ उज्झिअ मलअकेदु-कडअ-भूमिं णिअभूमि-कुसलदाए भअ-विलोल-सेस्स तणूकिद-परिवारेसुं सकं सकं विसअं अभिप्पत्थिदेसुं पत्थिवेसुं भद्दभट-पुरुसदत्त-डिङ्गुरात-बलउत्त--राजसेण-भागुराअण--रोहिदक्ख- विअअवम्मप्पमुहेहिं संजमिदो मलअकेदू। (प्रियवयस्य ! तवापि किमश्रोतव्यमस्ति ? तन्निशामय। अस्ति तावत् आर्य्य-चाणक्य-नीति-मोहित मतिना मलयकेतुहतकेन निराकृत्य राक्षसं हताश्चित्रवर्म्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः। ततः असमीक्ष्यकारी एष दुराचार इति कृत्वा उज्झित्वा मलयकेतुकटकभूमिं निजभूमि-कुशलतया भय-विलोल सैन्य तनूकृत-परिवारेषु स्वकं स्वकं विषयम् अभिप्रस्थितेषु पार्थिवेषु भद्रभट पुरुषदत्त-डिङ्गुरात-बलगुप्त राजसेन-भागुरायण रोहिताक्ष-विजयवर्म्मप्रमुखैः संयमितो मलयकेतुः) (ज)।

---

[ज] णिसमे ति। अस्ति एष वृत्तान्त इति शेषः। आर्य्यचाणक्यस्य नीत्या कौशलेन मोहिता वैकल्यं नीता मतिर्यस्य तेन। असमीक्ष्यकारी अविविच्यकार्य्यविधायी। इति कृत्वा विभाव्य, मलयकेतोः कटकभूमिं शिविरदेशम्, उज्झित्वा परित्यज्य, निज-भूमौ स्वस्वदेशे कुशलतया स्वाधीनभावेनाचरणे समर्थतया हेतुना, भयेन विलोलैश्चञ्चलीभूतैः सैन्यैः तनूकृताः पलायनादल्पीकृताः परिवाराः परिजना येषां तेषु, पार्थिवेषु मलयकेतुपक्षवर्त्तिषु राजसु। स्वकं स्वकं निजं निजम्, विषयं देशम्, अभिप्रस्थितेषु लक्ष्यीकृत्य गतेषु सत्सु, संयमितो बद्धः।

---

আমাকেও শুনাও; প্রিয়দর্শন চন্দ্রগুপ্তের নিকট কি সে প্রিয় সংবাদ জানাইলে।

সিদ্ধার্থক। বয়স্য! তোমারও কি অশ্রোতব্য আছে? অতএব

সমিদ্ধার্থকঃ। বঅস্‌স ! ভদ্দভটপ্পমুহা কিল দেবস্‌স চন্দ-সিরিণো অবরত্তা মলঅকেদুং সমস্‌সিদা ত্তি লোএ মন্তীঅদি। তা কিং ণিমিত্তং এদং কুকবি-কিদ-ণাড়অস্‌স বিঅ অণ্ণং মুহে অণ্ণং ণিব্বহণে ত্তি। (বয়স্য ! ভদ্রভটপ্রমুখাঃ কিল দেবস্য চন্দ্রশ্রিয়ঃ অপ-রক্তাঃ মলয়কেতুং সমাশ্রিতা ইতি লোকে মন্ত্র্যতে। তৎ কিং নিমিত্তমেতৎ কুকবি-কৃত-নাটকস্য ইব অন্যৎ মুখে অন্যৎ নির্ব্বহণে ইতি) (ক)।

অথ মলয়কেতোর্দোষপ্রখ্যাপনাৎ অপবাদো নাম বিমর্শসন্ধেরঙ্গম্, "দোষপ্রখ্যাপবাদঃ স্যাৎ" ইতি লক্ষণাৎ।

[ক] সমিদ্ধেতি। চন্দ্রশ্রিয়শ্চন্দ্রগুপ্তস্য সম্বন্ধে, অপরক্তা বিরক্তাঃ সন্তঃ। লোকে জনসমাজে, মন্ত্র্যতে আলোচ্যতে। এতৎ সংঘটনম্. কুৎসিতো নিকৃষ্টঃ কবিঃ কুকবি-স্তেন কৃতং যন্নাটকং তস্যেব, মুখে লোকবদনে মুখসন্ধৌ চ, নির্ব্বহণে কার্য্যকালে নির্ব্বহণসন্ধৌ চ। তথা চ "বীজোপগমন সন্ধিঃ" ইত্যাদিনা আলঙ্কারিকৈর্মুখসন্ধৌ নির্ব্বহণসন্ধৌ চ একবিষয়কতা নিরূপিতা, তদ্বৈপরীত্যং যথা অসমঞ্জসম্; তথা য

---

শোন। এইরূপ ঘটনা হইয়াছে যে, মাননীয় চাণক্যের কৌশলে মলয়-কেতুর বুদ্ধি নষ্ট হইয়া গিয়াছিল; তাই সে দুরাত্মা, রাক্ষসকে তাড়া-ইয়া দিয়া চিত্রবর্ম্মাপ্রভৃতি প্রধান পাঁচ জন রাজাকে বধ করিয়াছিল। তারপর এই মলয়কেতু অবিবেচনাপূর্ব্বক কার্য্য করে এবং দুরাচারী এই-রূপ মনে করিয়া, রাজারা আপন আপন দেশে স্বাধীনভাবে কার্য্য করা যায় বলিয়া, মলয়কেতুর শিবির পরিত্যাগপূর্ব্বক আপন আপন দেশের দিকে চলিয়া গেলেন; তাঁহাদের সৈন্যেরা ভয়ে চঞ্চল হইয়া পলায়ন-পূর্ব্বক আগেই তাঁহাদের পরিজনদিগকে কমাইয়া দিয়াছিল; তাহার পরে ভদ্রভট, পুরুষদত্ত, হিঙ্গুরাত, বলগুপ্ত, রাজসেন, ভাগুরায়ণ, রোহি-ত[illegible] জয়বর্ম্মা প্রভৃতি মলয়কেতুকে বন্ধন করিল।

[illegible]ক। সখে! ভদ্রভটপ্রভৃতি মহারাজ চন্দ্রগুপ্তের প্রতি [illegible]য়াই মলয়কেতুকে আশ্রয় করিয়াছেন ইহা লোকসমাজে

सिद्धार्थकः । वअस्स ! सुणु दाव, देवगदीए विअ अस्सुणिद-गदीए णमो अज्जचाणक्कणीदीए । (वयस्य ! शृणु तावत्, दैवगत्या इव अश्रुतगत्या नम आर्य्यचाणक्यनीत्यै ।) (ञ) ।

समिद्धार्थकः । वअस्स ! तदो तदो । वयस्य ! ततस्ततः ?

सिद्धार्थकः । वअस्स ! तदो पहुदि सारसाधणसमुदाएण इदो णिक्कमिअ अज्जचाणक्केण पडिवस्सं सअल-राअ-लोअ-सहिदं असेसं मेच्छबलं । (वयस्य ! ततः प्रभृति सारसाधनसमुदायेन इतो निष्क्रम्य आर्य्यचाणक्येन प्रतिपन्नं सकल-राज-लोक-सहितम् अशेषं म्लेच्छ-बलम्) (ट) ।

---

एव भद्रभटादयश्चन्द्रगुप्ते विरक्ताः सन्तो मलयकेतुमाश्रिता इति लोकमुखे आलोचना, त एव भद्रभटादयो मलयकेतुं बद्धवन्त इति कार्य्यकाले तदालोचनावैपरीत्यमसमञ्जसम्, तदेतत् कथं सञ्जातम् इति भावः । अत्र विपर्य्ययो नाम नाट्यलक्षणम्, "विचारस्यान्यथाभावः सन्देहात्तु विपर्य्ययः" इति लक्षणात् ।

[ञ] सिद्धेति । दैवस्य नियतेर्गत्याः प्रसरणस्येव, अश्रुता कुत्रापि नाकर्णिता गतिः प्रसरणं यस्यास्तस्याः, आर्य्यचाणक्यस्य नीत्याः कौशलस्य, नमः तां नमामीत्यर्थः । तथा च दैवगतिर्यथा अबोध्या, चाणक्यनीतिरपि तथैव अबोध्या ; तच्चाणक्यनीतिबलादेवेदं मुखनिर्वहणयोरसामञ्जस्यं जातमित्याशयः ।

"चतुर्थ्यर्थे षष्ठी" इति पिङ्गलसूत्रेण दैवगत्या इत्यादौ चतुर्थ्यर्थे षष्ठी ।

[ट] सिद्धेति । ततः प्रभृति मलयकेतोः संयमनात् परमित्यर्थः, सारादि

---

আলোচনা করিয়া থাকে। সুতরাং এরূপ ঘটনা ঘটিল কি জন্য যে, নিকৃষ্টকবিকৃত নাটকের ন্যায় মুখে এক, নির্ব্বহণে আর এক ?

সিদ্ধার্থক। বয়স্য ! শোন ; দৈবের গতির ন্যায় মাননীয়চাণক্য-নীতির গতিও কোথাও শুনা যায় না ; তাই তাঁহাকে নমস্কার করি।

সমিদ্ধার্থক। সখে ! তার পর তার পর ?

সমিদ্ধার্থকঃ। বঅস্স! কহিং তং ? (বয়স্য! কস্মিন্ তৎ ?) (ঠ)।

সিদ্ধার্থকঃ। বঅস্স! জহিং এদে। (বয়স্য! যস্মিন্ এতে) (ড)।

অদিসঅগুরুএণ দাণদপ্পেণ দন্তী
সজলজলদলীলং উব্বহন্তো ণদন্তি।
কসপহরভএণ জাঅকম্পা তুরন্তা
গহিদঅজণসজ্জা সম্পদন্তে তুরঙ্গা ॥ ২ ॥

(অতিশয়গুরুকেণ দানদর্পেণ দন্তিনঃ
সজল জলদ-লীলামুদ্বহন্তো নদন্তি।
কশাপ্রহারভয়েন জাতকম্পাস্ত্বরমাণাঃ
গৃহীতজয়নসজ্জাঃ সম্পদ্যন্তে তুরঙ্গাঃ ॥ ২ ॥)

---

শ্রেষ্ঠানি যানি সাধনানি সৈন্যানি তেষাং সমুদায়েন সমূহেন সহ। প্রতিপন্নং গৃহীতম্ আক্রম্য ধৃতমিত্যর্থঃ।

[ঠ] সমিদ্ধেতি। তৎ ধৃতং ম্লেচ্ছবলম্, কস্মিন্ স্থানে, তিষ্ঠতীতি শেষঃ।

[ড] সিদ্ধেতি। যস্মিন্ স্থানে, এতে পদ্যান্তশ্চন্দ্রগুপ্তপক্ষীয়া দন্তিনস্তুরঙ্গাশ্চ, নদন্তি ত্বরন্তে চ, তত্র তৎ ধৃতং ম্লেচ্ছবলং তিষ্ঠতীত্যর্থঃ।

অতিশয়েতি। দন্তিনশ্চন্দ্রগুপ্তপক্ষীয়া হস্তিনঃ, অতিশয়েন গুরুকং মহান্ তেন দানস্য মদজলস্য দর্পো দর্পপূর্বকবর্ষণং তেন, সজলানাং জলদানাং বর্ষুকমেঘানাং লীলাং বিলাসং তত্তুল্যামবস্থামিত্যর্থঃ, উদ্বহন্তো ধারয়ন্তঃ সন্তঃ, নদন্তি শব্দায়ন্তে। গৃহীতানি জয়নসজ্জানি আস্তরণাদীনি যুদ্ধজয়োপযোগীনি উপকরণানি যৈস্তে, তুরঙ্গা অশ্বাঃ,

---

সিদ্ধার্থক। বয়স্য! তার পর, মাননীয় চাণক্য উৎকৃষ্ট সৈন্যসমূহের সহিত এই নগর হইতে নির্গত হইয়া, সমস্ত রাজগণের সহিত সমস্ত ম্লেচ্ছসৈন্যকে ধরিয়া ফেলিলেন।

সমিদ্ধার্থক। বয়স্য! সে ম্লেচ্ছসৈন্য কোথায় ?

সিদ্ধার্থক। সখে! যেখানে এ গুলি রহিয়াছে।

समिद्धार्थकः । वअस्स ! एदं दाव चिट्ठदु । तहा सव्वलोअ-पच्चक्खं उज्झिआहिआरो भविअ अज्जचाणक्को किं उणो वि तं एव्व मन्तिपदं आरूढो । [वयस्य ! एतत्तावत् तिष्ठतु । तथा सर्वलोकप्रत्यक्षम् उज्झिताधिकारी भूत्वा आर्य्यचाणक्यः किं पुनरपि मन्त्रिपदमारूढः ?] [ढ] ।

सिद्धार्थकः । वअस्स ! अदिमुद्धोसि दाणिं तुमं, जो अमच्च-रक्खसेण वि अणवगाहिअपुव्वं अज्जचाणक्कचरिदं अवगाहिदुं इच्छसि । [वयस्य ! अतिमुग्धोऽसि इदानीं त्वम्, यः अमात्यराक्षसेनापि अनवगाहितपूर्वम् आर्य्यचाणक्यचरितम् अवगाहितुमिच्छसि] [ण] ।

---

कशानां ताड़नीनां प्रहाराद्भयेन, जातकम्पाः सन्तः, त्वरमाणा गमनाय सत्वराः, सम्पद्यन्ते भवन्ति ।

अत्र सजलानां जलदानां लीलामिव लीलामिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः । मालिनी वृत्तम् ॥३॥

(ढ] समिद्धेति । एतत् विपक्षसम्बन्धि आलोचनम् । उज्झितः परित्यक्तः अधिकारी मन्त्रिपदं येन सः ।

(ण) सिद्धेति । अतिमुग्धः नितान्तमूढ़ः । अनवगाहितपूर्वम् अबुद्धपूर्वम् । अवगाहितुं बोद्धुम् ।

---

হস্তিগণ দর্পসহকারে অতিপ্রচুর মদজলবর্ষণপূর্ব্বক, বর্ষণশীল মেঘের সাদৃশ্য ধারণ করতঃ, বৃংহিতধ্বনি করিতেছে ; আর, যুদ্ধার্থ সজ্জিত অশ্বগণ কশাপ্রহারের [চাবুক মারার] ভয়ে কম্পিত হইয়া, গমনের জন্য ত্বরান্বিত হইয়া রহিয়াছে ॥৩॥

সমিদ্ধার্থক । বয়স্য ! এ আলোচনা থা'ক । আর্য্য চাণক্য সকল লোকের সমক্ষে সেই ভাবে মন্ত্রিপদ ত্যাগ করিয়া, আবারও কি জন্য সেই মন্ত্রিপদেই আরোহণ করিলেন ?

সিদ্ধার্থক । সখে ! তুমি এখন অত্যন্তমুগ্ধই হইয়াছ ; কেন না,

समिद्धार्थकः। वअस्स! अध अमच्चरक्खसो सम्पदं कहिं ?।
[वयस्य! अथ अमात्यराक्षसः साम्प्रतं कस्मिन् ?] [त]।

सिद्धार्थकः। वअस्स! सो क्खु तस्सिं पलअकोलाहले वड्ढमाणे मलअकेदुकडआदो णिक्कमिअ उन्दुरणामधेएण चरेण अणुसरन्तो इमं ज्जेव कुसुमउरं आगदो त्ति अज्जचाणक्कस्स णिवेदिदं। [वयस्य! स खलु तस्मिन् प्रलयकोलाहले वर्द्धमाने मलयकेतुकटकात् निष्क्रम्य उन्दुरनामधेयेन चरेण अनुस्रियमाणः इदमेव कुसुमपुरम् आगत इति आर्य्यचाणक्यस्य निवेदितम्] [थ]।

समिद्धार्थकः। वअस्स! तधा णाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ संपदं अकिदत्थो पुणो वि कधं इमं ज्जेव कुसुमउरं आअदो ? (वयस्य! तथा नाम अमात्यराक्षसो नन्द-राज्य प्रत्यानयने कृतव्यवसायी निष्क्रम्य साम्प्रतम् अकृतार्थः पुनरपि कथम् इदमेव कुसुमपुरम् आगतः ?) [द]

---

[त) समिद्ध ति। कस्मिन् स्थाने, वर्त्तत इति शेषः।

(थ] सिद्ध ति। स राक्षसः, तस्मिन् चित्रवर्म्मादिपञ्चनृपतिवधकालोत्पन्ने, प्रलये प्रलयकाल इव यः कोलाहलस्तस्मिन्। चरेण चाणक्यस्यैव गुप्तचरेण, अनुस्रियमाणः अनुगम्यमानः। आर्य्यचाणक्यस्य समीपे, निवेदितं तेनैव चरेणेत्यर्थः।

---

অমাত্যরাক্ষসও পূর্ব্বে যাহা বুঝিতে পারেন নাই, তুমি আর্য্য চাণক্যের সেই চরিত্রই বুঝিতে ইচ্ছা করিতেছ।

সমিদ্ধার্থক। বয়স্য! অমাত্য রাক্ষস এখন কোথায় ?

সিদ্ধার্থক। সখে! সেই প্রলয়কালীন কোলাহল বৃদ্ধি পাইতে থাকিলে, তিনি মলয়কেতুর শিবির হইতে নির্গত হইয়া, এই কুসুমপুরেই আসিয়াছেন; উন্দুরনামক কোন গুপ্তচর তাঁহার অনুসরণ করিতেছিল, সে আসিয়া এ বিষয় আর্য্য চাণক্যের নিকট জানাইয়াছে।

सिद्धार्थकः। वअस्स! तक्केमि, चन्दणदासस्स सिणेहेण त्ति। (वयस्य! तर्कयामि चन्दनदासस्य स्नेहेनेति) (ध)।

समिद्धार्थकः। वअस्स! सच्चं चन्दणदासस्स सिणेहेण त्ति। अध चन्दनदासस्स मोक्खं पेक्खसि? [वयस्य! सत्यं चन्दनदासस्य स्नेहेनेति। अथ चन्दनदासस्य मोक्षं प्रेक्षसे) [न]।

सिद्धार्थकः। वअस्स! कुदो से अधण्णस्स मोक्खो? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अम्हेहिं वज्झट्टाणं पवेसिअ वावादइदव्वो। (वयस्य! कुतः अस्य अधन्यस्य मोक्षः? स खलु साम्प्रतम् आर्य्यचाणक्यस्य आज्ञया द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः) (प)।

---

(द) समिद्धेति। नन्दराजस्य प्रत्यानयने पुनरप्युद्धारे, तथा अनिश्चयेन, कृतो व्यवसायः अध्यवसायस्तेष्टो येन सः, निष्क्रम्य अस्मात् कुसुमपुरादेव निर्गत्य, अकृतार्थः अकृतकार्य्यः नन्दराज्यस्य प्रत्यानयने असमर्थः सन्नित्यर्थः, कथमागतः, लज्जाया बाधासत्त्वेऽपीति भावः।

[ध] सिद्धेति। स्नेहेन आगत इति सम्बन्धः।

[न] समिद्धेति। प्रेक्षसे सम्भावयसि?

(प) सिद्धेति। अधन्यस्य अपुण्यवतः पापिन इत्यर्थः, अकाले मृत्युपस्थितेरिति भावः। "सुकृती पुण्यवान् धन्यः" इत्यमरः।

---

समिद्धार्थक। বয়স্য! অমাত্যরাক্ষস নন্দরাজ্য ফিরাইয়া আনিবার জন্য সেইরূপ অধ্যবসায় করিয়া, এ স্থান হইতে নির্গত হইয়া, সে বিষয়ে অকৃতকার্য্য হইয়া, আবারও এই কুসুমপুরেই আসিলেন কেন?

সিদ্ধার্থক। সখে! চন্দনদাসের স্নেহে আসিয়াছেন ইহা আমি মনে করি।

সমিদ্ধার্থক। বয়স্য! চন্দনদাসের স্নেহেই আসিয়াছেন ইহা সত্য; চন্দনদাসের মুক্তি হইবে বলিয়া তুমি মনে কর কি?

সমিদ্ধার্থকঃ। সক্রোধম্। বঅস্স! কিং অজ্জচাণক্কস্স ঘাতঅজণো অণ্ণো ণত্থি, জদো অম্মে জ্জেব্ব ইদিসে ণিসংসে কম্মে ণিউঞ্জীঅদি। [বয়স্য! কিম্ আর্য্যচাণক্যস্য ঘাতকজনঃ অন্যঃ নাস্তি, যত আবাম্ ঈদৃশে নৃশংসে কর্ম্মণি নিযুজ্যাবহে) [ফ]।

সিদ্ধার্থকঃ। বঅস্স! কো জীবলোএ ণিবসিদুকামো অজ্জচাণক্কস্স আণত্তিং পড়িকূলেদি। তা এহি, চণ্ডালবেসধারিণো ভবিঅ চন্দনদাসং বজ্ঝট্ঠাণং ণেম্ম। (বয়স্য! ক জীবলোকে নিবসিতুকামঃ আর্য্যচাণক্যস্য আজ্ঞাং প্রতিকূলয়তি। তদেহি, চণ্ডালবেশধারিণৌ ভূত্বা চন্দনদাসং বধ্যস্থানং নয়াবঃ) (ব)।

ইত্যুভৌ নিষ্ক্রান্তৌ।

---

[ফ] সমিদ্ধেতি। নৃশংসে নির্দ্দয়ত্বাশ্রিতে। অত্র সম্ফেটো নাম বিমর্শসন্ধ্যঙ্গম্, "সম্ফেটো রোষভাষণম্" ইতি লক্ষণাৎ।

[ব) সিদ্ধেতি। আজ্ঞামিমাদেশম্. প্রতিকূলাং লঙ্ঘনাদিরূপাং করোতীতি প্রতিকূলয়তি অতিক্রামতীত্যর্থঃ। তদতিক্রমে তু মরণমবশ্যম্ভাবীতি ভাবঃ।

---

সিদ্ধার্থক। সখে! সে পাপিষ্ঠের মুক্তি হইবে কি রূপে? মাননীয় চাণক্যের আদেশে এখন আমাদের দুই জনেরই তাহাকে বধ্যস্থানে নিয়া বধ করিতে হইবে।

সমিদ্ধার্থক। [ক্রোধের সহিত] বয়স্য! মাননীয় চাণক্যের অন্য ঘাতক লোক কি নাই, যে, এইরূপ নৃশংসকার্য্যে আমাদিগকেই নিযুক্ত করিতেছেন।

সিদ্ধার্থক। সখে! জীবলোকে থাকিতে ইচ্ছা করে এমন কোন লোকই মাননীয় চাণক্যের আদেশের বিরুদ্ধাচরণ করে না। অতএব আইস, আমরা চণ্ডালের বেশ ধারণ করিয়া, চন্দনদাসকে শ্মশানে নিয়া যাই।

## प्रवेशकः । (भ) ।

ततः प्रविशति रज्जुहस्तः पुरुषः ।

पुरुषः । छग्गुणसंजोअदिढ़ा उवाअपड़िवाड़ीघटिदपासमुही ।
चाणक्कणीदिरज्जू रिउसंजमणुज्जआ जअदि ॥४॥

[षड्गुणसंयोगदृढ़ा उपाय परिपाटी-घटित पाश मुखी ।
चाणक्य-नीति-रज्जु रिपु-संयमनोद्यता जयति ॥]

---

[भ) प्रवेशक इति । प्रवेशयति परवर्त्तिपात्रप्रवेशं सूचयतीति प्रवेशकः रूपकगतांशविशेषः । तल्लक्षणं यथा साहित्यदर्पणे—

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥"

शेषं वृत्तवर्त्तिष्यमाणकथांशनिदर्शकत्वं संक्षिप्तार्थत्वञ्च । तथा चात्र चित्रवर्म्मादिपञ्च-नृपतिवध-मलयकेतुबन्धनोल्लेखादिना वृत्तकथांशनिदर्शनम्, "चन्दनदासं वध्यस्थानं नीत्वा" इत्यनेन च वर्त्तिष्यमाणकथांशनिदर्शनमुन्नेयम् ।

षड्गुणेति । षट् गुणाः सन्ध्यादय एव सूत्राणि तेषां संयोगेन सम्यग्योजनेन दृढा अच्छेद्या, उपायानां चतुर्णामेव सामदानभेददण्डानां परिपाट्या यथायथप्रयोगेन घटितं निर्म्मितं पाशः अस्त्रविशेष एव मुखम् आदिमावस्था सम्मुखभागश्च यस्याः सा तादृशी च, रिपोः शत्रोः संयमनाय बन्धनाय उद्यता उद्युक्ता, चाणक्यस्य नीतिरेव रज्जुर्बन्धनदाम, जयति सर्वश्रेष्ठतया वर्त्तते ; मत्करधृतरज्जोरपि तत्प्रयुक्तत्वादिति भावः ।

अत्र श्लिष्टं साङ्गं रूपकमलङ्कारः ।

---

(ইহার পরে দুই জনেই চলিয়া গেল)

## প্রবেশক ।

তাহার পর, রজ্জুহস্তে কোন পুরুষ প্রবেশ করিল ।

---

४···रिउसंजमण ऋजुआ ।

परिक्रम्यावलोक्य च। एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कहिदो पदेसो। जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो। विलोक्य। कधं एसो क्खु अमच्चरक्खसो किदाव-गुण्ठणो इदो ज्जेव आअच्छदि। ता जाव इमेहिं जिण्णु-ज्जाणपादवेहिं अववारिदसरीरो पेक्खामि, कहिं आसणपरि-ग्गहं करेदि। इति परिक्रम्य स्थितः। (एष स आर्य्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः। यस्मिन् मया आर्य्यचाणक्याज्ञया अमात्यराक्षसः प्रेक्षितव्यः। कथम् एष खलु अमात्यराक्षसः कृतावगुण्ठन इत एव आगच्छति। तद्यावत् एभिः जीर्णोद्यानपादपैः अपवारितशरीरः प्रेक्षे, कस्मिन् आसनपरिग्रहं करोति) (म]।

---

"सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड् गुणाः" "सामदानभेददण्डमित्यु-पायचतुष्टयम्" इत्यमरः ॥४॥

[म] परिक्रम्येति। कृतम् अवगुण्ठनं वस्त्रेण मुखावरणं येन सः, अन्यथा मुखं दृष्ट्वा लोकः परिचिनुयादिति भावः। जीर्णस्य पुरातनस्य उद्यानस्य पादपैर्वृक्षैः, अप-वारितम् आच्छादितं शरीरं यस्य सः।

---

পুরুষ। ছয়টী গুণ সংযুক্ত করায় যাহা সুদৃঢ় এবং চারিটী উপায়ই উপযুক্তভাবে প্রয়োগ করায় যাহার পাশরূপ মুখ নির্ম্মিত হইয়াছে, শত্রু-বন্ধনে উদ্যত সেই চাণক্যের নীতিরূপ রজ্জুর জয় হউক ॥৪॥

[পাদক্ষেপ করিয়া দেখিয়া) মাননীয় চাণক্যের চর উন্দুর যাহার কথা বলিয়াছে, এই সেই স্থান; যে স্থানে আমি মাননীয় চাণক্যের আদেশে অমাত্য রাক্ষসের সহিত সাক্ষাৎ করিব। (দর্শন করিয়া) এই যে রাক্ষস অবগুণ্ঠন করিয়া এই দিকেই আসিতেছেন। অতএব এই পুরাতন উদ্যানের বৃক্ষসমূহ দ্বারা আবৃতশরীর হইয়া দেখি কোথায় ইনি আসন গ্রহণ করেন। (ইহার পর পাদক্ষেপ করিয়া অবস্থান করিল)

ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः [य]।

राक्षसः। सवाष्पम्। कष्टं भोः कष्टम् (र)।

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः।
आप्तैरप्यनवाप्तपौरुषफलैः कार्यस्य धूरुज्झिता
किं कुर्वन्त्वथवोत्तमाङ्गरहितैरङ्गैरिव स्थीयते ॥५॥

---

(य) तत इति। यथा येन प्रकारेण निर्दिष्टः पूर्वमुक्तस्तेन प्रकारेण कृताव-गुण्ठनतयेत्यर्थः।

(र] राक्षस इति। भो इति विषादार्थकमव्ययम्। "भोस्तु सम्बोधनविषादयोः" इति मेदिनी।

अन्वयः—उच्छिन्नाश्रयकातरा श्रीः कुलटा इव गोत्रान्तरं गता; गतानुगतिकाः प्रजाः त्यक्तानुरागाः [सत्यः] ताम् एव अनुगताः। आप्तैः अपि अनवाप्तपौरुष-फलैः (पुम्भिः] कार्यस्य धूः उज्झिता; अथवा किं कुर्वन्तु; उत्तमाङ्गरहितैः अङ्गैः इव स्थीयते ॥५॥

उच्छिन्नेति। उच्छिन्नो विनष्टः आश्रयः अवलम्बनं यस्याः सा अतएव च कातरा विह्वला चेति सा तादृशी, श्रीः राजलक्ष्मीः, कुलटा व्यभिचारिणी स्त्री इव, गोत्रान्तरं भिन्नगोत्रं नन्दाच्चन्द्रगुप्तमित्यर्थः, गता प्राप्ता। कुलटापि पूर्वाश्रितपुरुषनाशे पुरुषान्तरं गच्छति। गतं तत् श्रिया गमनम् अनु लक्ष्यीकृत्य गतिर्गमनं यासां तास्त-थोक्ताः, मेषयूथानुसारिण्य इत्याशयः; प्रजा जनाः, त्यक्तः अनुरागः पूर्वप्रभुभक्तिर्याभिस्ताः तादृश्यः सत्यः, तां श्रियमेव, अनुगता अनुसृताः चन्द्रगुप्तं प्रत्येव अनुरक्ता इत्यर्थः।

---

তদনন্তর নির্দ্দিষ্টভাবে সশস্ত্র রাক্ষস প্রবেশ করিলেন।

রাক্ষস। (অশ্রুপাতের সহিত) কষ্ট! হায় কি কষ্ট।

---

[৫] উচ্ছিন্নাশ্রয়··· ···ঙ্গৈরিব স্থীয়তে।

अपि च, पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली।
स्थिरीभूता चास्मिन्, किमिह करवाम, स्थिरमपि
प्रयत्नं नो येषां विफलयति दैवं द्विषदिव ॥६॥

---

तथा आप्तैरपि अविश्वस्तेषु च। तथा विश्वस्तैरपि जनैः, न अवाप्तं दैवप्रातिकूल्यात् न लब्धं पौरुषफलं यैस्तादृशैः सद्भिः, कार्य्यस्य धूर्भारः, उज्झिता त्यक्ता। ननु तथापि कथमुज्झिता इत्याह—अथवा किं कुर्वन्तु स्वाम्यभावात् किमपि न कुर्वन्तीत्यर्थः। अतएव उत्तमाङ्गरहितैः मस्तकशून्यैः, अङ्गैः कबन्धैरिव, स्थीयते निष्प्र्यै-ईत्यते। अयन्तु महानेव विषाद इति भावः।

अत्र विषादप्रतिपादनकार्य्यं प्रति बहुतरकारणोपन्यासात् समुच्चयोऽलङ्कारः, श्रौतं पूर्णोपमाद्वयञ्च, तेषामङ्गाङ्गिभावेन सङ्करः। तथा कुर्वन्त्विति कर्तृवाच्यप्रत्ययेन प्रक्रम्य स्थीयत इति भाववाच्यप्रत्ययाभिधानात् प्रत्ययविषया भग्नप्रक्रमता दोषः; स च 'किं कुर्वन्त्वथवोत्तमाङ्गरहितान्यङ्गानि तिष्ठन्ति वा' इति पाठेन समाधेयः। अत्र पाठे "लम्बितलोचनकर्णौ" इति माघश्लोकवत् इवार्थे वाशब्दः। विषादो व्यभिचारी भावः, प्रसादो गुणः, वैदर्भी च रीतिः।

नन्देन मुराख्यायां दास्यां गूढमुत्पादितत्वात् चन्द्रगुप्तस्य नन्दापेक्षया नीचान्तरत्वमेव; "अशुल्कपद्धतायान्तु पितुर्दासा वाढुरेव ते" इति स्मृतेः। शार्दूलविक्रीडितं वृत्तम् ॥५॥

---

অবলম্বন নষ্ট হইয়া যাওয়ায় আকুলা রাজলক্ষ্মী কুলটা রমণীর ন্যায় অন্য পুরুষ অবলম্বন করিয়াছে; গতানুগতিকরীতির অনুসারী প্রজাগণ অনুরাগ পরিত্যাগ করিয়া সেই রাজলক্ষ্মীরই অনুসরণ করিয়াছে; আর বিশ্বস্তলোকেরাও পুরুষকারের ফল না পাইয়া কার্য্যের ভার ত্যাগ করিয়াছে; অথবা তাহারা আর কি করিবে, মস্তকশূন্য অঙ্গের তুল্যই নিষ্ক্রিয়ভাবে রহিয়াছে ॥৫॥

---

प्रयत्नं नो येषाम् ..।

